

मह श्रीवस्तुपाल. मह श्रीललितादेवी. महं श्रीवेजलदेवी.

oto of the images of Vastupala and his two wives in Vastupala's temple on Mount Abu."

श्रीवस्तुपालविरचितं

# नरनारायणानन्दमहाकाव्यम्

# NARANĀRĀYAṆĀNANDA

OF

VASTUPĀLA

EDITED WITH INTRODUCTION AND APPENDICES

BY

C. D. DALAL M. A.,
Librarian, Central Library

AND

R. ANANTAKRISHNA SHASTRY,
Shastry, Central Library

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF
HIS HIGHNESS THE MAHARAJA GAIKWAD OF BARODA

CENTRAL LIBRARY
BARODA.
1916.

उद्भ्राम्यद्भिश्च विद्यालयमगमनमः कोविदेन्द्रा विनन्द्रा
मन्त्री बद्धाञ्जलिर्वो विनयननशिरा याचते वस्तुपालः ।
अल्पप्रज्ञाप्रबोधादपि सपदि मया कल्पितेऽस्मिन्प्रबन्धे
भूयो भूयोऽपि यूयं जनयत नयनक्षेपतो दोषमोषम् ॥

Published by Janardan Sakharam Kudalkar, M. A., LL. B., Curator of State Libraries, Baroda, for the Baroda Government and Printed by Manilal Itcharam Desai, at **the Gujarati Printing Press, No. 8, Sassoon Buildings, Circle, Fort, Bombay.**

*Price Rs. 1 4-0.*

# INTRODUCTION

पीयूषादपि पेशलाः शशधरज्योत्स्नाकलापादपि
स्वच्छा नूतनचूतमञ्जरिभरादप्युल्लसत्सौरभाः ।
वाग्देवीमुखसामसूक्तविशदोद्गारादपि प्राञ्जलाः
केषां न प्रथयन्ति चेतसि मुदं श्रीवस्तुपालोक्तयः ॥

The author of this second work in the Gaekwad's Oriental Series is Vastupâla, who with his valour and statesmanship extended and strengthened the power of King Vîradhavala of Dholka He is, however, better known to us by his numerous public works and especially the temples on Mount Âbu. His tolerance and cosmopolitism are proverbial. He favoured all creeds and sects and even built mosques for Mahomedans who were at that time hated as Mlecchas.[1] We have got contemporary records of his deeds of valour and charity and of works of public utility. Besides the various praśastis and inscriptions, and prabandhas in the *Prabandhachintâmani* and *Chaturvinśatiprabandha*, the glories of his deeds are sung by Someśvara in his *Kîrtikaumudi* and by Arisinha in his *Sukritasankîrtana* Bâlachandra, the expenses of whose installation as an Âchârya were defrayed by Vastupâla, composed after his death *Vasantavilâsa*, a Mahâkâvya at the request of Vastupâla's son Jaitrasinha A good deal of valuable information about his career is collected in Jinaharsha's *Vastupâlacharitra*.

Vastupâla's life can be viewed from four different stand-points —(1) as a minister (2) as a warrior, (3) as a philanthropist and builder of public places and temples (4) as a patron of poets and himself a poet. The first three points will be dealt with in the introductions to the *Hammiramadamardana* and *Vasantavilâsa*. Here we shall see it only from the last view-point

1 The following from वस्तुपालसङ्कीर्तन in तीर्थकल्प of Jinaprabha composed in Samvat. 1385 will illustrate his cosmopolitan nature

लक्षमेकं सपाद जिनबिम्बाना कारितम् । अष्टादश कोटयः षण्णवतिर्लक्षाः श्रीशत्रुञ्जयतीर्थे द्रविण व्ययितम् । द्वादश कोटयोऽशीतिलक्षाः श्रीउज्जयंते । द्वादशकोट्यस्त्रिपञ्चाशल्लक्षा अर्बुदशिखरे लूणिगवसत्याम् । नवशतानि चतुरशीतिश्च पौषधशालाः कारिताः । पञ्चशतानि दन्तमयसिंहासनाना पञ्चशतानि पञ्चोत्तराणि समवसरणानां जादरमयानाम् । ब्रह्मशालाः सप्तशतानि, सप्तशतानि सत्रागाराणा, सप्तशती तपस्विकापालिकमठानाम् । सर्वेषां भोजननिर्वापादिदान कृतम् । त्रिशच्छतानि द्व्युत्तराणि माहेश्वरायतनाना, त्रयोदशशतानि चतुरुत्तराणि शिखरबद्धजैनप्रासादानां, त्रयोविंशतिः शतानि जीर्णचैत्योद्धाराणाम् । अष्टादशकोटिसुवर्णव्ययेन सरस्वतीभाण्डागाराणां स्थानत्रये भरण कृतम् । पञ्चशती ब्राह्मणानां वेदपाठ करोति स्म । वर्षमध्ये सङ्घपूजात्रितयम् । पञ्चदशशती श्रमणानां गृहे नित्यं विहरति स्म । तटिककार्पटिकानां सहस्रं साधिकं प्रत्यहमभुङ्क्त । त्रयोदश तीर्थयात्राः सङ्घपतीभूय कृताः । तत्र प्रथमयात्रायां चत्वारि सहस्राणि पञ्चशतानि शकटाना सशय्यापालकानां,

**Vasantapâla-the poetic name of Vastupâla.** It will be seen from the author's colophon at the end of each canto of this poem that it bears the name Vasantapâla instead of Vastupâla. The author himself makes it clear on this point that he got this name from Harihara, Someśvara and other poets.[1] Bâlachandra has called his life of Vastupâla *Vasantavilâsa*

**The subject of the present work.** The present work, which is a Mahâkâvya in 16 cantos, describes the friendship of Arjuna and Krishṇa, their rambles on Mount Girnar and the consequent abduction of Subhadrâ by Arjuna. The subject-matter is very scanty as the greater part of the poem is taken up by the conventional poetical descriptions such as that of the city, the people, the king and his court, the rise of the sun and the moon and gathering of flowers. The reader will find that Mâgha's *Siśupâlavadha* seems to have been the author's model. The poem seems to have established itself among the poetic world, as the 7th verse of its 1st canto is quoted in Jahlaṇa's *Sûktimuktâvali*. One more verse is to be found in the *Kavikalpalatâ* of Amara,[2] the celebrated author of the *Bâlabhârata*. Narendraprabha referring to the poetical skill of our author in the *Alankâramahodadhi* says that Vastupâla's poetical skill is such as even renders tender the language of Vyâsa.[3] This is most probably a reference to the present work, as its subject matter is taken from the *Mahâbhârata*.

**The date of composition.** In the last canto of this poem, the author says that his first outburst of poetry took the form of a hymn in the praise of

---

सप्तशती सुखासनानाम्, अष्टादशशती वाहिनीनाम्, एकान्नविंशतिः शतानि श्रीकरीणाम्, एकविंशतिः शतानि श्वेताम्बराणाम्, एकादशशती दिगम्बराणां, चत्वारि शतानि सार्द्धानि जैनगायनानां, त्रयस्त्रिंशच्छती बन्दिजनानाम् । चतुरशीतिस्तडागाः सुबद्धाः । चतुःशती चतुःषष्ट्यधिका वापीनां, पाषाणमयानि द्वात्रिंशद्दुर्गाणि, दन्तमयजैनरथाना चतुर्विंशतिः, विंशं शतं शाकघटितानाम् । सरस्वतीकण्ठाभरणादीनि चतुर्विंशतिर्बिरुदानि श्रीवस्तुपालस्य । चतुःषष्टिर्मसीतयः कारिताः । दक्षिणस्यां श्रीपर्वतं यावत्, पश्चिमायां प्रभासं यावत्, उत्तरस्यां केदारं यावत्, पूर्वस्यां वाराणसीं यावत्, तयोः कीर्तनानि । सर्वाग्रेण त्रीणि कोटिशतानि चतुर्दशलक्षा अष्टादशसहस्राणि अष्टशतानि लोष्टिकत्रितयोनानि द्रव्यव्ययः । त्रिषष्टिवारान् सङ्ग्रामे जैत्रपत्रं गृहीतम् ।

(1) कीर्त्या सौरभसारसान्द्रसुमनःसन्दोहसन्दोहकृत्कान्त्या पाति वसन्तमन्वहममाविर्भावितार्थक्रमम् । ख्यातं प्राप वसन्तपाल इति यो नामाद्वितीयं मुदा विद्वद्भिः परिकल्पितं हरिहरश्रीसोमशर्मादिभिः ॥

नरनारायणानन्द XVI 38

(2) शूरः स्थिरतरस्फारशरभारधरः पुरः । आर वैरभरस्मेरवीरवारहरः परः ॥

कविकल्पलता–श्लेषसिद्धिप्रतान & नरनारायणानन्द XIV 16

(3) त्यागाः कुड्मलयन्ति कल्पविटपित्यागक्रियापाटवं काम काव्यकलापि कोमलयति द्वैपायनीयं वचः । बुद्धिर्धिक्कुरुते च यस्य धिषणां चाणक्यचिन्तामणेः सोऽयं कस्य न वस्तुपालसचिवोत्तसः प्रशंसास्पदम् ॥

अलङ्कारमहोदधि ॥ १२ ॥

Âdîśvara on the Śatrunjaya Hill.[1] This hymn was composed by Vastupâla on the occasion of his first great pilgrimage which, as the author of the *Prabandha-chintâmaṇi* says, took place in Samvat 1277.[2] As Jinaharsha's *Vastupâla-charitra* makes him to recite the 9th verse of that hymn before Âdinâtha, and as there is no reference in the last canto to the building of temples on Mts. Âbu and Girnâr in Samvt. 1287 and 1288, we can place the date between Samvat. 1277 and 1287.

**Vastupâla, a man of letters.**[3]—Himself a poet, Vastupâla was possessed of critical faculties to detect and remove the defects from others' poems.[4] He always appreciated and admired good poetry[5] and it was only due to this that Harihara was received at the Court of Dholka with honour in spite of the jealousy of Someśvara. He established three great libraries at the great cost of 18 crores. The story of the tact with which Harihara's ms. of *Naishadhiya* was copied out and put into his library shows how anxious he was to collect mss. and that his library contained all important works.[6] Mâṇikyachandra, the author of *Kâvyaprakâśasanketa* was ordered to be given mss. of all religious works from

---

(1) श्रीशत्रुञ्जयशैलशेखरमणेः श्रीनाभिसूनुप्रभोः पीत्वा वक्त्रसुधासुदीधितिसुधामाकण्ठमुत्कण्ठया ।
व्यानन्वन् कविना नितान्तमुदितः सद्यस्तदुद्गारवत् तस्यैवादिजिनेश्वरस्य जनयामास स्तवं यो नवम् ॥

नरनारायणानन्द XVI 39

(2) अथ संवत् १२७७ वर्षे सरस्वतीकण्ठाभरणलघुभोजराजमहाकविमहामात्यश्रीवस्तुपालेन महायात्रा प्रारेभे ।

प्रबन्धचिन्तामणि p. 251

(3) वैदग्ध्यं विगताश्रयं श्रितवति श्रीहेमचन्द्रे दिवं श्रीप्रह्लादनमन्तरेण विरतं विश्वोपकारव्रतम् ।
दृष्ट्वा तद्द्वयमत्र मन्त्रिमुकुटे श्रीवस्तुपाले कविसत्कीर्त्तिस्तुतिकैतवादिति मुदामुद्गारमाविष्कृतवान् ॥

सोमेश्वर—सुरथोत्सव XV. 52.

(4) सत्कविकाव्यशरीरे दुष्यदगददोषमोषणैकभिषक् । श्रीवस्तुपालसचिवः सहृदयचूडामणिर्जयति ॥

सोमेश्वर—उल्लाघराघव 11

He praised the poetry of Someśvara and Harihara as follows

विबुधवर्गनिसर्गबन्धुना चौलुक्यचक्रवर्त्तिसचिवेन श्रीवस्तुपालेन सूक्तमुदीरितम् ।
यस्यास्ते मुखपङ्कजे सुखमृचां वेदः स्मृतीर्वेद यश्चेता सद्मनि यस्य यस्य रसना सूते च सूक्तामृतम् ।
राजानः श्रियमर्जयन्ति महतीं यत्पूजया गूर्जराः कर्तुं तस्य गुणस्तुतिं जगति कः सोमेश्वरस्येश्वरः ॥

सोमेश्वर—उल्लाघराघव I 8

मुधा मधु मुधा सीधु मुधा सोऽपि सुधारसः । आस्वादितं मनोहारि यदि हारिहरं वचः ॥

(5) श्रीशारदैकसदनं हृदयालवः के नो सन्ति हन्त सकलासु कलासु निपुणाः ।
तादृक्परस्य ददृशे न कवित्वतत्त्वबोधाय बुद्धिविभवस्तु न वस्तुपालात् ॥

उदयप्रभ—धर्माभ्युदय XV 61

(6) See हरिहरप्रबन्ध in चतुर्विंशतिप्रबन्ध.

his library.[1] He not only appreciated the divine muse, but also requested others to write religious and literary works for his instruction and delectation The *Kathâratnasâgara* of Narachandrasûri in 15 tarangas[2] and *Alankâramahodadhi* of his pupil Narendraprabha in 8 chapters[3] were composed in this way.

**Vastupâla quoted in anthologies.** Jahlaṇa in his *Sûktimuktâvalî* has quoted three verses of Vastupâla.[4] One of these occurs as the 7th stanza of the first canto of the present work.[5] The other two cannot be traced. The *Śârngadharapaddhati* too quotes one verse of Vastupâla which is already found in Jahlaṇa's *Sûktimuktâvali*.[6] It appears from *Ullâgha Râghava* of Someśvara that Vastupâla was fond of composing Sûktis.[7] Some of these will be found collected in Appendix II from the *Prabandhachintâmani*, *Chaturvinśatiprabandha* and *Vastupâlacharitra* of Jinaharsha. It would thus appear that Vastupâla's fame as a poet was not restricted to Gujarat, but also extended so far and wide as to attract the authors of the *Sûktimuktavalî* and *Śârngadharapaddhati* to include his verses in their collections.

(1) See Appendix III p 76

(2) अन्येद्युर्भक्तितो मौलौ निधाय करकुड्मलम् । तेन विज्ञपितः श्रीमान् नरचन्द्रो मुनीश्वरः ॥ ८ ॥
युष्माभिः स्वकराम्बुजस्य शिरसि न्यस्तस्य माहात्म्यतः प्राप्तं जन्मजितोऽपि दुर्लभतरं सङ्घाधिपत्यं मया ।
धर्मस्थानशतानि दानविधयस्ते ते च मन्तर्निर्मितः सम्प्रति जैनशासनकथाः श्रोतुं समुत्कण्ठते ॥ ९ ॥
इत्यभ्यर्थनया चक्रुर्वस्तुपालस्य मन्त्रिणः । नरचन्द्रमुनीन्द्रास्ते श्रीकथारत्नसागरम् ॥ १० ॥

(3) अन्येद्युर्भक्तितो मौलौ निधाय करकुड्मलम् । तेन विज्ञापितः श्रीमान नरचन्द्रमुनीश्वरः ॥ १६ ॥
केचिद्विस्तरदुस्तरास्तदितरे सङ्क्षेपदुर्लक्षणाः सन्त्यन्ये सकलाभिधेयविकलाः क्लेशावसेयाः परे ।
इत्थं काव्यरहस्यनिर्णयबहिर्भूतैः प्रभूतैरपि ग्रन्थैः श्रोत्रगतैः कदर्थितमिदं कामं मदीयं मनः ॥ १७ ॥
तन्मे नातिमहाविस्तरं कविकलासर्वस्वगर्वोद्धुरं शास्त्रं ब्रूत किमप्यनन्यसदृशं बोधाय दुर्मेधसाम् ॥ १८ ॥
इत्यभ्यर्थनया प्रतीतमनसः श्रीवस्तुपालस्य ते श्रीमन्तो नरचन्द्रसूरिगुरवः साहित्यतत्त्वं जगुः ॥ १९ ॥
तेषां निदेशादथ सद्गुरूणां श्रीवस्तुपालस्य मुदे तदेतत् ।
चकार लिप्यक्षरसन्निविष्टं सूरिर्नरेन्द्रप्रभनामधेयः ॥ २० ॥

(4) सम्प्रति न कल्पतरवो न सिद्धयो नापि देवता वरदाः ।
जलद त्वयि विश्राम्यति सृष्टिरियं भुवनकोशस्य ॥
यत्रोन्मुखस्य चातकमण्डलवृन्दस्य भ्रमेण सोऽवस्थितभूपभूमे ।
वेदस्यताकाभ्रगृहीतमुक्तनमोनदीबिन्दुभिरेति तृप्तिम् ॥
अम्बा न यदि निःशङ्कपङ्कसङ्कुलितो भवेत् ।
ततः कुतस्ते धौरेय धुर्यता व्यज्यताभियम् ॥

(5) यत्रोन्मुखस्य (6) सम्प्रति न कल्पतरवो No 766

(7) अम्भोजसम्भवसुता वक्त्राम्भोजेऽस्ति वस्तुपालस्य ।
यद्वीणारणितानि श्रूयन्ते सूक्तिदम्भेन ॥ 8 th Act.

**Vastupâla, a poet.** References to Vastupâla as a poet are not difficult to find Vastupâla is called the godson of Sarasvati [1] He himself has used this title in the present work.[2] In one of the praśastis of his temples on Mount Girnar, he is called the recognized son of the Goddess of Learning. Kavikuñjara and Kavichakravarti are his other *birudas* In the praśasti of the temple on Mount Âbu, Someśvara calls him the best among poets and says that he never steals ideas of others in his literary composition.[3] In the *Ilankâramahodadhi* it is stated that Vastupâla alone has got reputation in poetical method.[4] Merutunga in his *Prabandhachintâmani* applies the epithet of Mahâkavi to Vastupâla, and quotes some Sûktis of our poet which, he says, are the compositions of the great poet Vastupâla himself.[5]

**Vastupâla as a patron of poets.** The extent of his donations to poets was so great that he was called *Laghu Bhojarâja*. The prabandhas given in the Appendix III amply illustrate his great liberality towards poets. He patronized Somesvara, [6]Harihara, Arisinha, and enriched Dâmodara, Nânâka, Jayadeva, Madana, Veekala, Krishṇasinha, Sankaraswâmi and many other poets and bards who entertained him with their poetry. Someśvara not only got a Śâsana but he was now and then favoured with very liberal donations. He composed Kîrtikaumudî in praise of his patron, and in his other works too he has immortalized Vastupâla No work is known to have

(1) धर्मसूनुः सरस्वत्याः, शारदाप्रतिपन्नापत्येन. Girnar Inscription

वस्तुपालयशोवीरौ सत्य वाग्देवतासुतौ । एको दानमयमायोऽन्दुभयोरन्यथा कथम् ॥

कीर्त्तिकौमुदी I 29

(2) नरनारायणानन्दो नाम कन्दो मुदामिदम् । तेने तेन महाकाव्यं वाग्देवीधर्मसूनुना ॥

नरनारायणानन्द XVI 40

(3) विरचयति वस्तुपालश्चुलुक्यसचिवेषु कविषु च प्रवरः ।
न कदाचिदर्थहरणं श्रीकरणे काव्यकरणे वा ॥ [illegible] ॥

(4) केचित्काञ्चिझल्लझलायितपदव्युत्पादिनः केचन
प्रत्यग्रप्रतिभाप्रमाणमणितिव्युत्पत्तिवैहासिकाः ।
वैदर्भी दधते रसानपि सदा सर्वाभिसारे [illegible]
काव्यस्याध्वनि वस्तुपालसचिवस्यैव प्रति [illegible] ॥

अलङ्कारमहोदधि 15

(5) इत्यादीनि श्रीवस्तुपालमहाकवेः स्वयंकृतान्यमूनि ।

प्रबन्धचिन्तामणि p. 265

6 Harihara is praised by सोमेश्वर as under —

स्ववाक्पाकेन यो वाचा पाकं शास्त्यपरान् कवीन् । स्वयं हरिहरः सोऽभूत् कवीनां पाकशासनः ॥

कीर्त्तिकौमुदी I. 25

been written by Harihara. Arisinha sang the good deeds of his patron in his *Sukritasankirtana* and got a Śâsana Nothing is known of other poets Śankaraswami may be probably the Sankarâchârya of Dwârka of the time.

**The manuscript material**—The present edition is based on the single ms. of the poem hitherto known, from the Bhandar of the Sangha in Phofalia Vâdâ at Pattan. It is a very beautifully written paper ms. dated Samvat 1477 and is uniformly correct A few grammatical and metrical irregularities will be found in the poem, but in the absence of another ms. we cannot say whether they are of the original writer or of scribes The author himself with all humility requests the learned world to correct the faults which may have occurred in the present poem either through want of proper knowledge or haste.[1] The ms consists of 25 leaves with 15 lines on a page. The scribe's colophon runs as follows —

संवत् १४७८ वर्षे मार्गशीर्षवदि १४ चतुर्दश्यां गुरौ लिखिता ॥ * ॥ श्रीः ॥ * ॥

The following is added, after this, in a different hand, showing that the ms. was purchased by the owner from the scribe for the religious merits of his mother —

श्रीपार्श्वः श्रेयसे भूयाद्भवतां भवतान्तिभित् ।
यत्सेवा कल्पवल्लीव दत्ते चिन्तितं फलम् ॥ १ ॥
अस्ति स्वस्तिपदं लक्ष्म्या स्वर्गिगर्वापहारकम् ।
वडली नाम नगरं नगरङ्कल्पनालयम् ॥ २ ॥
तत्राभूद्धान्धिकश्रेष्ठी प्राग्वाटज्ञातिमण्डनम् ।
मृगाह्वयः श्राद्धधर्मकर्मकर्मठमानसः ॥ ३ ॥
रूपिणीति प्रिया तस्य पुत्राः सोमादयोऽभवन् ।
गुणप्रपञ्चरुचिराः पञ्च पञ्चानना इव ॥ ४ ॥
नरनारायणानन्दकाव्यं तेन यशस्विना ।
स्वमातृश्रेयसे श्रेयो निजद्रव्येण लेखितम् ॥ ५ ॥

शुभं भवतु ॥ श्रीः ॥ सं० १४७९ वर्षे वडलीग्रामवास्तिगां०सोमाकेन स्वमातृश्रेयसे नरनारा-
यणानन्दकाव्यपुस्तिका लेखिता ॥ श्रीः ॥ ग्रन्थाग्रं १२५०.

(1) उद्दाम्यद्दिग्विजयिसाम्राज्यसमयसमनमः कोविदेन्द्रा वितन्द्रा
मन्त्री बद्धाञ्जलिर्वो विनयननशिरा याचते वस्तुपालः ।
अल्पप्रज्ञाप्रबोधादपि सपदि मया कल्पितेऽस्मिन्प्रबन्धे
यो यो दोषोऽपि दृष्टः जनयत नयनक्षेपतो दोषमोषम् ॥

# CONTENTS.



श्रीगूर्जरेश्वरमहामात्यश्रीवस्तुपालविरचितं

# नरनारायणानन्दमहाकाव्यम् ।

## प्रथमः सर्गः

आस्ते पुरी शक्रपुरीव मध्ये वारांनिधेर्द्वारवती प्रतीता ।
शोणाश्मवेश्मांशुदलत्तमिस्रा या दुर्गभूमीव बभौ दिनस्य ॥ १ ॥
ज्यौत्स्नीषु नृत्यानि तनोति रङ्गत्तरङ्गपाणिर्दयिता नदीनाम् ।
यन्मध्यचन्द्रोपलतल्पसौधसुधाधुनीनामिव सङ्गमेन ॥ २ ॥
एत्य प्रतीचीं मणिचैत्यकुम्भान्यत्राङ्गनानां च मुखानि वीक्ष्य ।
ह्रिया पयोधौ पततः प्रपन्नम्लानी विभाधीशविभावरीशौ ॥ ३ ॥
नभोनदीस्पर्शवता पताकाञ्चलेन चैत्यानि चलेन यत्र ।
तापं हरन्ति द्युमणेरिवोच्चैः कलङ्कमिन्दोरिव मार्जयन्ति ॥ ४ ॥
इतस्ततोऽपि प्रसरन्ति शुभ्रा यस्यां समीरोर्मिहताः पताकाः ।
चैत्येषु धूपागुरुधूमवीचीं मालिन्यभीता इव वञ्चयन्त्यः ॥ ५ ॥
यत्रोन्मुखं चातकवृन्दमब्दभ्रमेण चैत्योत्थितधूपधूमे ।
वेल्लत्पताकाग्रगृहीतमुक्तनभोनदीबिन्दुभिरेति तृप्तिम् ॥ ६ ॥
अनारतं दानरतैरतीव यस्यां वितीर्णेषु विवेकिवर्गैः ।
जना न जानन्ति निजेषु सङ्ख्यां धनेषु तारागणवेदिनोऽपि ॥ ७ ॥
आजन्मदुःस्था इव कल्पवृक्षं वीक्ष्यागतं याचकमेकमेव ।
सौजन्यभाजोऽपि जना यदन्तर्मिथो विगृह्णन्ति गृहाय नेतुम् ॥ ८
दातापि चिन्तामणिकामधेनुकल्पद्रुवर्गं सुमनःसु सिन्धुः ।
दानैर्जितो यत्र जनस्य पादौ मुक्ताफलैरञ्चति वीचिनुन्नैः ॥ ९ ॥
अलङ्कृता नायकसन्निभेन यस्यां महीपालनिकेतनेन ।

छिधास्थितिः स्फाटिकभित्तिशुभ्रा विभाति हारस्त्रगिवाट्टपङ्क्तिः ॥ १०
घण्टापथं कुम्भिघटामदाम्बुच्छटाविलं यत्र विभूषयन्ति ।
अश्वत्वराविच्छुटदश्ववारहारापदेशाः कुसुमोपहाराः ॥ ११ ॥
मदाम्बुना धूपजधूमजालैः शीतं सदा सिन्धुजलानिलेन ।
जनाभिमर्देन सदापि घर्मो यत्रेति कालत्रयमेककालम् ॥ १२ ॥
यतीन्द्रतीव्रव्रतपावकेन मुहुर्मनोभूर्ज्वलितोऽपि यत्र ।
जायापतिप्रेमरसार्द्रदृष्टिपीयूषवृष्ट्यैव पुनर्नवः स्यात् ॥ १३ ॥
उरःपुरे लोलदृशामुरोजकुम्भद्वयेन स्मरयौवनाभ्याम् ।
अकारि शृङ्गाररसस्य यस्यां रसेषु साम्राज्यपदाभिषेकः ॥ १४ ॥
जायापतीनामनिरूपभासा दासायिते कामरती यदन्तः ।
पुरःप्रतिच्छन्दमिषेण सेवां नित्यं विधत्तः स्फटिकावनीषु ॥ १५ ॥
अहर्दिवं सद्मसु रत्नदीपविद्योतहृद्योदरकन्दरेषु ।
मुग्धाङ्गनानां घनधूपधूमध्वान्तस्त्रपां यत्र रते भिनत्ति ॥ १६ ॥
अन्तर्निकेतं निकटे गुरूणां त्रपास्पृशो दर्पणदर्शनेषु ।
यस्यामवष्टम्भनिभेन रत्नस्तम्भेषु पश्यन्ति मुखानि वध्वः ॥ १७ ॥
यस्यां निशि प्रौढगृहाधिरूढस्त्रीवर्गवक्त्रेन्दुसभाग्रवर्त्ती ।
धत्ते विधुर्व्योमनि हास्यपात्रनटश्रियं लाञ्छनवर्णकेन ॥ १८ ॥
नक्तं शशाङ्कोपलकुट्टिमेषु यस्यामुडूनि प्रतिबिम्बितानि ।
पुष्पन्धयाः पुष्पधिया धयन्तः सुधामरन्दैर्मुदमुद्वहन्ते ॥ १९ ॥
यस्यां परस्त्रीं परवैभवं च विदन्ति सन्तस्तृणतोऽपि हीनम् ।
तृणेन भुक्तोत्तरशौचकर्णकण्डूयनाद्यैरपि किञ्चन स्यात् ॥ २० ॥
यस्यां मणिश्रेणिपिनद्धसौधत्विषा निषिद्धेषु तमःसु शश्वत् ।
पतिव्रतानामपतिव्रतानामप्यस्ति भेदो यदि हृद्विकारैः ॥ २१ ॥
रोदित्यसौ चापलदूषणेन दासीव यस्यां गुणयन्त्रिता श्रीः ।
उत्तालवालत्रुटितोरुहारमुक्ताश्रुभिर्द्वारि विशारदानाम् ॥ २२ ॥
यस्यां रहस्तुङ्गगृहाग्रभागकृतस्थितीनां कवितुं कवीनाम् ।
गुरुः सुराणामपि किञ्चिदन्तेवासित्वमायाति वियद्विलासी ॥ २३ ॥
लीलासमुल्लङ्घितसागरोऽपि निपीतवार्टीकुसुमासवोऽपि ।
यत्रातिमन्दस्तृणमप्यवन्यां वातोऽपि नोत्पाटयते भियेव ॥ २४ ॥
साक्षादपि क्ष्मापतितेषु कोऽपि नैव क्षिपत्याभरणेषु पाणिम् ।

प्राज्यप्रजाङ्घ्रिक्रमणैरमूनि क्रमेण रेणुत्वमयन्ति यत्र ॥ २५ ॥
तस्यां प्रभुर्विष्णुरभूदमित्रलतादवो यादवमौलिरत्नम् ।
लक्षीकृतः सर्वदिगीशलक्ष्मीलीलाकटाक्षैरिव कृष्णकान्तिः ॥ २६ ॥
कौमोदकीनन्दकशार्ङ्गचक्रैश्चिरं चतुर्दिग्जयिभिश्चतुर्भिः ।
यस्योत्तमर्णेव चतुर्भुजस्य भुङ्क्ते विभूतिं चतुरङ्गसेना ॥ २७ ॥
मत्स्यावतारस्य ममाश्रमोऽयमौर्वाग्निना मा स्म विशोषि सिन्धुः ।
इतीव तं पूरयितुं स तेने दिने दिने दानपयःप्रवाहान् ॥ २८ ॥
वक्षोरुहाडम्बरपीड्यमानवपुः प्रियायाः पुरुषायितेषु ।
सस्मार यः कूर्मवरावतारे सिन्धुभ्रमन्मन्दरकन्दघट्टम् ॥ २९ ॥
मग्नः सुखं वैषयिकेऽपि पङ्के यः क्ष्माधृतिर्द्वेषिहनिक्षमोऽभूत् ।
वराहमूर्तेरिव तस्य नौमि स्वेच्छाविलासं स्तनयित्नुभासः ॥ ३० ॥
विदारितं वज्रशिलादृढं यैरूरुः सुरारेर्दललीलयैव ।
व्यापारिता येन मुहुर्नखास्ते तन्वीतनुषु व्यनमन् ह्रियेव ॥ ३१ ॥
बलादधःकृत्य बलिं मुरारिः पुरा प्रतेने भुवि दौस्थ्यदीक्षाम् ।
चिरान्निराकर्तुमिमीव दोषं दानं ददाति स्म ततोऽधिकं यः ॥ ३२ ॥
भवत्प्रतापासहनः सहस्रकरोऽभ्युदेतीत्युरुबन्दिवाचा ।
रतान्ततान्तोऽपि मुमोच निद्रां प्रगे सहस्रार्जुनकोपनो यः ॥ ३३ ॥
नतोऽपराधी पदयोः प्रियाया निजास्यबिम्बानि नखेषु वीक्ष्य ।
स्मरन्दशग्रीवमिवोग्रमग्रे धनुर्ग्रहव्यग्रकरोऽभवद्यः ॥ ३४ ॥
स्थाणुं शिरःस्थानलनेत्रदीपं संसूच्य घोरेऽपि रजोऽन्धकारे ।
मर्माविधो बाणबलेषु बाणान्वध्येषु मध्येमृधमक्षिपद्यः ॥ ३५ ॥
जघान युद्धेषु हठेन शत्रून्रौद्रो रसो मूर्त्त इव क्रुधा यः ।
प्रियास्तु तेषां रुदतीरपश्यत् कृपार्द्रचेता नयनैः सबाष्पैः ॥ ३६ ॥
साम्राज्यभाजि प्रमदासु साम्नि दाने पुनर्मार्गणमण्डलीषु ।
प्रभावभुग्नारिगणस्य यस्य ह्रिया विलीनौ खलु भेददण्डौ ॥ ३७ ॥
असौ प्रजाः पाति पितेव नित्यं नयप्रवीणा इति तुष्टुवुस्तम् ।
मूढा न जानन्त्युदरोत्थविश्वः स एव मातापि पितापि तासाम् ॥ ३८ ॥
अपि त्रिलोकीपरमार्थवेदी तोषाय तेषां सविलोलमौलिः ।
अज्ञानपूर्वैरिव कोविदानां सूक्तैश्चमत्कारमिवाचचार ॥ ३९ ॥
प्रज्ञाततत्त्वोऽपि पपाठ शास्त्राण्यमन्त्रयन्मन्त्रिगणं च कार्ये ।

जगद्गुरुर्दर्शयितुं परेषामेव व्यवस्थां जगतीपतीनाम् ॥ ४० ॥
अन्यासु खेलत्युपरुद्ध एव वश्यो ममैवायममायरागः ।
इत्थं प्रियाभिः पृथगेव मेने स ब्रह्मचर्यं तु चचार तत्त्वात् ॥ ४१ ॥
पुपोष मित्राण्यपि निर्ममोऽसौ गतस्पृहो राज्यमपि प्रतेने ।
जघान शत्रूनपि शान्तचेताः प्रभुः प्रजैकार्थकृतावतारः ॥ ४२ ॥

तेजोवह्निस्त्रिजगति कियत्कालमुत्तालदीप्तिः
स्थाता तस्य त्रिभुवनविभोर्विद्म निच्छद्मनेदम् ।
आकल्पान्तं तपनवडवापावकत्र्यक्षचक्षु-
र्वज्रव्याजाद्दिदधति रुचं यस्य तेऽपि स्फुलिङ्गाः ॥ ४३ ॥

इति श्रीगूर्जरेश्वरमहामात्यश्रीवसन्तपालविरचिते नरनारायणानन्दनाम्नि महाकाव्ये पुरनृपवर्णनो नाम प्रथमः सर्गः ॥ १ ॥

सङ्ग्रामसिंहपृतनारुधिरारुणानि श्रीवस्तुपालकरवालविजृम्भितानि ।
कीनाशकासरकटाक्षमहोदराणि को नाम वीक्षितुमपि क्षमते विपक्षः ॥

## द्वितीयः सर्गः

एकदा कृतदिनादिमत्क्रियः सैष भूषणविभाविभासुरः ।
संसदः सदनमासदद्विभुर्दीप्तविद्युदिव वारिदोऽम्बरम् ॥ १ ॥
दारितारिकुलदन्तिमण्डलीदन्तमौलिमणिकर्मनिर्मितम् ।
क्रूरभूरमणभीतिदं तदा भद्रपीठमधिभूरभूषयत् ॥ २ ॥
पादपीठचितरत्नजन्मनां भानुभत्मैतपटीयसामपि ।
रोचिषामुपरिचारिणीर्वहन्पादपल्लवनखच्छविच्छटाः ॥ ३ ॥
आन्तरत्रिजगतीनलज्वलत्पन्नगेश्वरकिरीटरत्नजैः ।
नाभिवर्त्मपथिकैरिवाधिकैरंशुभिः कपिशमंशुकं वहन् ॥ ४ ॥
आस्यसौरभमिलन्मधुव्रतीकैतवादुपरिसज्ञकज्जलम् ।
श्रीविलाससदनोपमे हृदि द्वारदीपमिव कौस्तुभं वहन् ॥ ५ ॥
वैरिवीरवनिताश्रुवाहिनीकज्जलाविलसमुद्भवैरिव ।
मौक्तिकैर्विरचितं प्रपञ्चयन्हारमङ्गरुचिमेचकं हृदि ॥ ६ ॥
कामिनीकुचविलासदुर्मदान्पाणिपङ्कजनखानुरक्तिषः ।
शोणरत्ननवनिर्मितोर्मिकाकङ्कणाङ्गदमदच्छिदो दधत् ॥ ७ ॥

धीमतां स्वपरभेदसङ्कथाव्यथ्यमानमनसां शिरोमणिः ।
आत्मकण्ठपरपाञ्चजन्ययोरन्तरं भृशमदर्शयन्नयम् ॥ ८ ॥
अंसयुग्ममभिमानपौरुषश्रीविलासगिरिसोदरं दधत् ।
रत्नकुण्डललुलच्छविच्छलात्तत्पदक्रमणयावकाङ्कितम् ॥ ९ ॥
हृत्प्ररूढसततप्रसन्नतावल्लिफुल्लकुसुमैरिव स्मितैः ।
सेवकान् सुरभयन्नभीप्सितश्रीसमागममहोत्सवोत्सुकान् ॥ १० ॥
द्योतभाजि परमात्मसौरभैरान्तरे जगति लज्जिताविव ।
निःसृतौ श्रुतिपथेन कुण्डलच्छद्मना रविनिशाधिपौ दधत् ॥ ११ ॥
ये उभे अपि युधि क्रुधा दधौ घर्मधामघटिते इव प्रभुः ।
आश्रितेषु नयने ददत्तदा ते सुधाकिरणकल्पिते इव ॥ १२ ॥
दोषकल्मषकपाटसम्पुटच्छादितं जनितसेवने जने ।
भाग्यमुद्धटयतानया भ्रुवा कुञ्चिकाकुटिलया विराजितः ॥ १३ ॥
केशगर्भितपयोदमण्डलीमण्डनैरिव तडिल्लताततैः ।
पद्मरागमणिशेखरप्रभागौरवैर्गगनवर्त्म गौरयन् ॥ १४ ॥
कान्तकान्तिनिकृतैरपि स्फुरन्माल्यगन्धलयलोललोलुभैः ।
सेव्यमानचिकुरो मृदुक्वणैश्चाटुशालिभिरिवालिमण्डलैः ॥ १५ ॥
अङ्गिनीभिरिव सर्वदिग्जयश्रीभिरिन्दुवदनाभिरग्रतः ।
धूतधौतरुचिचामरच्छलात् ढौकितोज्ज्वलयशा विभुर्बभौ ॥ १६ ॥

( चतुर्दशभिः कुलकम् )

सेवकैरयमधारि सुप्रभुर्मूर्ध्नि मूर्द्धमणिबिम्बकैतवात् ।
कौस्तुभप्रतिकृतिच्छलात्कृती सोऽपि तान्गुणनिधीन्दधौ हृदि ॥ १७ ॥
तेन तोयजरुचः प्रपञ्चिता निर्विशेषमनु सेवकान्दृशः ।
श्रीः सरोजवनकेलिकौतुकात्तेषु च क्षणमदात्पदं तदा ॥ १८ ॥
वैरिवारवधदुर्द्धरो धियां धाम राम इव राजते भवान् ।
स्तूयमान इति कोविदैः स्फुरद्गूढभावजनितस्मितोऽभवत् ॥ १९ ॥
प्रस्तुतागतकथासु विस्मिता मौलिकम्पनमिषान्मनीषिणः ।
चक्रिरे श्रवणकेलिदोलयान्दोलनाविलसितानि तद्गिराम् ॥ २० ॥
सर्वदर्शनसमग्रसत्कलाकृत्स्नशास्त्रमय इत्यमुं जगुः ।
ऐकदेशिकरसस्पृशो जडा विश्वमेव तु न तन्मयं विदुः ॥ २१ ॥

द्वारसीमनि कृतोद्धतध्वनीन्बन्दिनो नवनवानुपेयुषः ।
मन्त्रिमित्रकविकेलिसम्मदी सम्पदैव सपदि न्यवारयत् ॥ २२ ॥
अर्थिनां पृथुमनोरथानिगं तेन किञ्चन तथा ददे तदा ।
तैर्यथा सपदि तस्य मन्दिरद्वारि कल्पतरुकाननायितम् ॥ २३ ॥
आपनद्वरविलासिनीजनैर्नूपुरध्वनिननर्त्तितस्मरैः ।
स्वामिनो न चकृषे सभाजनप्रस्तुतालपनलालसं मनः ॥ २४ ॥
स प्रभुः स्मरवशैः सभामणिस्तम्भपद्धतिषु बिम्बिताकृतिः ।
वारवामनयनाजनैरवष्टम्भसम्भ्रममिषेण सस्वजे ॥ २५ ॥
पद्मनाभपदपद्मसेवनप्रक्रमस्मितमुखैः क्रमेण सा ।
राजहंसनिकरैरपूर्यत श्रीविलासरसदीर्घिका सभा ॥ २६ ॥
उल्लसन्नयनकैरवा स्फुरत्तोषतोयधितरङ्गसङ्गतिः ।
कुड्मलीकृतकराम्बुजद्वया तन्मुखेन्दुपुरतः सभा बभौ ॥ २७ ॥
हारमण्डलितदन्तदीधितिः शेखरीकृतकराम्बुजद्वयः ।
वेत्रभृत् भृशमनातुरः पुरस्तं तदा मधुजितं व्यजिज्ञपत् ॥ २८ ॥
द्वारि तिष्ठति चिरान्निवारितो रैवताद्रिवनपालपूरुषः ।
त्वन्मुखेन्दुरुचिरोचने दधल्लोचने चलचकोरचारुणी ॥ २९ ॥
सैष सज्जनमनःसरोजिनीहंससंसदमुपैतु यातु वा ।
इत्यवेत्य मुकुटं व्यकम्पयत्तत्प्रवेशलकृतेऽथ केशवः ॥ ३० ॥
यावदाह्वयति तं न वेत्रभृत्तावदुत्पतितया नभस्तलम् ।
हूतिशब्द इव तस्य निर्ममे विष्णुमौलिकुसुमालिमालया ॥ ३१ ॥
वेत्रिनेत्रचलनात्ततः सभां स प्रविश्य च विनम्य च प्रभुम् ।
सर्वकालसकलर्तुमालिनो रैवतस्य कुसुमान्यढौकयत् ॥ ३२ ॥
तस्य पुष्पनिवहस्य च क्षणाद्विश्वनाथवदनाम्बुजस्य च ।
नव्यसौरभरसान्मिथस्तदा षट्पदा विदधिरे विपर्ययम् ॥ ३३ ॥
भ्रूलताविलसितैरितः प्रभोः प्राञ्जलिस्तदनु स व्यजिज्ञपत् ।
गूढसम्मदसुधातरङ्गिणीरङ्गदूर्मिचयतुल्ययगा गिरा ॥ ३४ ॥
यः परैः क्वचिददृष्टपृष्ठभूर्यस्तवापि मनसा सुहृन्मतः ।
यः परस्वपरकामिनीपरद्रोहमोहरहितः सतां हितः ॥ ३५ ॥
विश्वतीर्थपटलानि पावयन्पावनोरुचरितः स्वभावतः ।
स प्रभासभुवि मध्यमोऽधुना भूषणीभवति पाण्डुनन्दनः ॥ ३६ ॥

तद्वचःश्रवणसम्मदामृतस्नानपावनतरान्तरात्मनि ।
दीयतां किमु तवेति जल्पति श्रीपतौ स्मितमुखं जगाद सः ॥ ३७ ॥
त्वां विभुं प्रतिभुवं दिवाकरादर्थयेऽन्वहमहर्मुखेष्वहम् ।
याचितेन जगदीश दीयते तोषिणा तदधिकं किमु त्वया ॥ ३८ ॥

तस्मै ददावथ मुरारिरपारतोष-
स्तत्पारितोषिकविभूषणवाहनादि ।
ज्ञातो बहिः सहचरैरपि मोहवह्नि-
र्यैनैष सोऽहमिति कृप्तवचा विनिर्यन् ॥ ३९ ॥
शैलेन्द्रचूतबदरीवनखेलितानि
तानि स्मरन्निव भवान्तरलालितानि ।
रन्तुं नरेण सह रैवतकावनीषु
नारायणोऽजनि समुत्सुकचित्तवृत्तिः ॥ ४० ॥

इति श्रीगूर्जरेश्वरमहामात्यश्रीवसन्तपालविरचिते नरनारायणानन्दनाम्नि
महाकाव्ये सभावर्णनो नाम द्वितीयः सर्गः ॥ २ ॥

दृश्यः कस्यापि नाऽयं प्रथयति न परप्रार्थनादैन्यमन्य-
स्तुच्छामिच्छां विधत्ते तनुहृदयतया कोऽपि नैपुण्यपण्यः ।
इत्थं कल्पद्रुमेऽस्मिन्व्यसनपरवशं लोकमालोक्य स्रष्टुः
स्पष्टं श्रीवस्तुपालः कथमपि विधिना नूतनः कल्पवृक्षः ॥ २ ॥

## तृतीयः सर्गः

अथ कथमपि कल्पकोटिकल्पं क्षणमपि निर्गमयाम्बभूव देवः ।
नरपरिचयसत्वरो रथैकप्रगुणनसम्भ्रमनिर्भरेऽपि सूते ॥ १ ॥
अथ रथमभजद्भुजासहायो बलमपि वल्लभमप्रतीक्षमाणः
रणरणकबलेन पाण्डुसूनोः सपदि वशीकृतमानसो मुरारिः ॥ २ ॥
हृदयमपि विभो रयाज्जयद्भिर्नरपरिरम्भमनोरथातिकृष्टम् ।
रथचलननियोगतुल्यकालं हरिभिरभूष्यत रैवतोपकण्ठः ॥ ३ ॥
रथिपतिरयमेति कोऽतिदूरे निगदति यावदिदं हृदैव पार्थः ।
त्वरितममुमुपेत्य तावदभ्युत्थितिकृतसम्भ्रममालिलिङ्ग विष्णुः ॥ ४ ॥
इह हृदि सुहृदः सदाऽस्मि नो वा ध्रुवमिति वीक्षितुमच्युतार्जुनाभ्याम् ।

दृढनरपरिरम्भकैतवेन प्रकटमकाङ्क्षि मिथोऽपि हृत्प्रवेशः ॥ ५ ॥
यदयमधिपतिर्व्यधत्त जिष्णोर्भुजपरिरम्भनिपीडनं तदानीम् ।
यदि तदुदधिमन्थने वितन्यात्तदिह भवेन्न लवोऽपि मन्दरस्य ॥ ६ ॥
चिरसमयसमागमोत्कपार्थप्रचलभुजापरिरम्भसम्भ्रमेण ।
हरिजठरजगन्मुमूर्च्छ नैव प्रमदसुधारससेकतः कथञ्चित् ॥ ७ ॥
सुहृदयममुमवाप्य सव्यसाची किमपि तदूर्जितमर्जयाम्बभूव ।
प्रभुरयमुदपाटि येन विश्वत्रयनिलयः परिरम्भलीलयैव ॥ ८ ॥
समजनि परिरम्भणेन नारायणनरयोरिह कोऽपि स प्रमोदः ।
परमपदलयोऽपि निःस्पृहोऽपि व्रतिनिवहः स्पृहयाम्बभूव यस्मै ॥ ९ ॥
अपुनरपसृतिप्रपञ्चभाजोरिव परिरम्भभरे तयोर्विभेदम् ।
विपुलपुलकदण्डकैर्मिथोऽन्तर्गतपरिभाषणकौतुकानि तेनुः ॥ १० ॥
उरसि रसिकयोस्तयोः प्रमोदाद्दृढपरिरम्भविभिन्नभूषणेऽपि ।
द्रुतमतनुत तारहारलक्ष्मीं स्मितरुचिविच्छुरिताश्रुबिन्दुपङ्क्तिः ॥ ११ ॥
कथय कथय पार्थ तीर्थयात्रां विरचितवानसि कुत्र कुत्र तीर्थे ।
जनय नयनयोर्विकीर्णतापं श्रवणपथं सुकृतिन् कृतार्थमेनम् ॥ १२ ॥
इति गदति तदा गदाग्रजेऽस्मिन्नुदितमुदि स्मितभस्मितेन्दुशोभे ।
अमृतरुचमुवाच वाचमेन्द्रिः प्रमदरसप्रसरप्रसक्तिभाजम् ॥१३॥ (युग्मम्)
ध्रुवमवधिमपूरयं पुराऽहं नियमितकाननवासवासराणाम् ।
त्वयि पुनरवलोकिते ममाभूत्त्रिभुवनतीर्थमगेऽद्य तीर्थयात्रा ॥ १४ ॥
त्वमपि मदवलोकमञ्चोभिर्यदि मुदमुद्वहसि त्रिलोकनाथ ।
तदिति फलमदत्त भाग्यवल्लिर्मयि तव भालनिभालनोद्भवेव ॥ १५ ॥
इति परमपरस्परानुरागप्रगुणितगौरवगौरवाग्विवेकौ ।
रहसि विहसितौ विलेसतुस्तौ मृदुगति रैवतकावनीवनीषु ॥ १६ ॥
हृद इव सुहृदः पुरो नरस्य स्वयमथ सङ्कथयाम्बभूव विष्णुः ।
निजनगरनगस्य रैवतस्य द्युतिजितदैवतपर्वतस्य शोभाम् ॥ १७ ॥
गुरुगगनमहीरुहादिकन्दोऽवनिवनितानवकेशपाशबन्धः ।
अविरतगतिखिन्नदक्षकन्याविलसनभूमिरयं मनो धिनोति ॥ १८ ॥
स्फटिकघटितभूमिकासु भास्वत्तरतरलद्युतिमण्डलावलुप्ताः ।
इह जलरुहसङ्गिभृङ्गकोलाहलकलितैः कथयन्ति पल्वलाः स्वम् ॥ १९ ॥
भुवि दृढभवदीयदोर्धुतायां गगनधुनीजलकेलिशान्ततापाः ।

इह शिखरिणि गण्डभित्तिकण्डूयनमपि सानुषु दिग्गजाः सृजन्ति ॥२०॥
नियतमविदिताभिरन्तराले स्फटिकतटीभिरिह स्खलन्ति बाणाः ।
शबरकरसमुज्झिताः पशूनामिव सुकृतेन कृताभिरुज्ज्वलेन ॥ २१ ॥
उपरितनशिरःसरःसु लोकान्तरितमपि द्युमणिं निरूपयन्तः ।
इह न विरहिणो भवन्ति कोका निशि बिसिनीनिचया न सङ्कुचन्ति॥२२॥
उपरितनवनावनीषु नीचैश्चलजलदाम्विह चातकाः स्मयन्ते ।
जलकणनिकरैर्निकाममन्दभ्रमदमशब्दवनेभहस्तमुक्तैः ॥ २३ ॥
इह तटविनिवेशिराजसूरे परिणतदिग्गजकर्णतालवीज्ये ।
तरलिततडिदायुधा ध्वनन्तः क्षितिभृति भान्ति पयोभृतोऽङ्गरक्षाः ॥ २४ ॥
अरुणमणिगणप्रणद्धमूर्त्तेरलिकुलकोकिलकोमलद्युतोऽस्य ।
प्रसरति परितो वपुष्यमान्ती द्युतिपटलीव तडित्वतां मिषेण ॥ २५ ॥
श्रमविहितफलाय नेह कोऽपि स्पृहयति गूढनिधानमण्डलाय ।
यदयमनुपदं जनार्थमुद्घाटितपटुरत्ननिधानभूतसानुः ॥ २६ ॥
इह विवरपथस्पृशः कदाचिद्द्रुमशिखराधिरूढाः कदाचिदेते ।
भुजगजगति वा नभस्तले वा सुरसरितं मुनयः श्रयन्ति शुद्ध्यै ॥ २७ ॥
अनवरतरमार्द्रदृष्टिर्लीलाविशदमरीचितरङ्गभासमानः ।
त्वमिव हृदि निरन्तरं मदीये निवसति सानुचरः सुरव्रजोऽस्मिन् ॥२८॥
मणितमभिनयत्सु मञ्जु पारापतपतगेषु विशेषितानुरागाः ।
अनुकृतचटुषु स्वयं शुकेषु प्रियमिह मानमुचः स्त्रियः श्रयन्ते॥ २९ ॥
विसृमरतिमिरे गुहागृहे स्त्रीरमविवशेषु चिरं वनेचरेषु ।
द्रुतकृतशमितैस्तडित्प्रदीपैर्निनदति खिङ्ग इवेह वारिवाहः ॥ ३० ॥
दिवसविवशमन्धकारमेष स्वकुहरसीमनि रक्षति क्षितिभृः ।
रजनिजनिततामसप्रसन्नं दिवसमपि ज्वलदोषधिच्छलेन ॥ ३१ ॥
इह यदकृत तिर्यगङ्गमिश्रा रुचिरकुचाः सुमुखीश्च किन्नरस्त्रीः ।
सततनतिरतासु तेन मन्ये विबुधवधूषु विधिर्भृशं प्रसन्नः ॥ ३२ ॥
सकलमकलनीयमेव देवैरपि धरणीधरगणप्रर्वाणशक्तिम् ।
शिखरिणमसुमस्य पश्यतस्त्वामिव किमु तृप्यतु नेत्रयोर्द्वयं मे ॥ ३३ ॥
प्रमदवनमिदं नदीगमग्रे प्रमुदितमस्य गिरेरुपत्यकासु ।

त्वयि विलसति सन्निधौ प्रसूनैः स्मितमिव नृत्यति पल्लवाग्रहस्तैः ॥३४

शशिमणिगणबन्धबन्धुरासु प्रतिनिशमत्र विलासदीर्घिकासु ।
प्रसृमरकर एष तोयकर्मान्तिकविभवं रजनीविभुर्बिभर्त्ति ॥ ३५ ॥

प्रतिमितनिजमूर्त्तिवीक्षणेन स्फुटमणिभित्तिषु भासुरप्रमोदाः ।
अपि रजनिषु निश्चितं प्रियाणामिह विरहं न विदन्ति चक्रवाकाः ॥३६

समिरविस्रमरैर्गिरीन्द्रचूलागतशशिकान्तसुधालवैर्विमिश्रा ।
प्रतिकलमतिरोचते हिमांशौ रुचिरिह केलिचकोरकामिनीभ्यः ॥ ३७

असमशरनृपस्य विश्वजेतुर्यश इव गायति षट्पदीकुटुम्बे ।
रविरनुपदमत्र नृत्यतीव स्फुटवरलारवनूपुरप्रणादम् ॥ ३८ ॥

नवकुसुमपरागराजिभाजि भ्रमरकदम्बककर्बुरेऽन्तरिक्षे ।
अपि सविधमुपैति नात्र सिंहः समुदितधूमदवानलभ्रमेण ॥ ३९ ॥

छायाभिरन्धतमसानि विधाय मूले
दत्तच्छटा मधुरमैस्तरवः सृजन्ति ।
शाखाग्रहस्तचलनप्रसृतैः प्रसूनैः
शय्यामिह प्रियसखा इव दम्पतीनाम् ॥ ४० ॥

अस्मिंल्लतानां च महीरुहां च मिथः परीरम्भभृतां सकम्पम् ।
स्वेदोदविन्दूनिव पश्य पुष्पव्रजान् हरत्येष शनैः समीरः ॥ ४१ ॥

पश्य प्रसूनविनिविष्टनिरन्तराल-
रोलम्बजालमिषतोऽञ्जनमञ्जुलश्रीः ।
छायेव मूलमणिवेदिमरीचिर्वीचि-
नुन्ना स्फुरत्युपरि भूमिरुहामिहासौ ॥ ४२ ॥

तपोवनं कामतपोधनस्य वनेऽत्र सर्वे ऋतवः सदैव ।
निर्वैरमन्योन्यविरोधिनोऽपि मिलन्ति पुष्पस्मितभासमानाः ॥ ४३ ॥

तादृग्भासुरभूति तस्य विफलं राज्यं विलासाचलः
सोऽयं रैवतको न यस्य तदिदं लीलावनं यस्य न ।
किञ्चैतत् द्वयमप्यवैमि विफलं तस्य प्रशस्यः सुहृत्
पार्श्वे यस्य भवादृशो न हि दृशोः पीयूषपूरप्रपा ॥ ४४ ॥

इत्युद्दामरसप्रसृत्वरगिरं दामोदरं सम्मदी
द्राक्षामण्डपमण्डनायितरुचौ माणिक्यवेदीतटे ।

धृत्वा पाणितले न्यवेशयदसौ भीमानुजन्मा नव-
प्रेमस्थेमवशो गिरामवसरं प्रस्तावयन्नात्मनः ॥ ४५ ॥

इति श्रीगूर्जरेश्वरमहामात्यश्रीवसन्तपालविरचिते नरनारायणानन्दनाम्नि
महाकाव्ये नरनारायणसङ्गमवर्णनो नाम तृतीयः सर्गः ॥ ३ ॥

श्रीवस्तुपाल कलिकालविलक्षणस्त्वं
संलक्ष्यसे जगति चित्रचरित्रपात्रम् ।
यद्दानसौरभवता भवता वितेने
नानेकपेन मदमेदुरिता मुखश्रीः ॥ ३ ॥

## चतुर्थः सर्गः

अथ विष्णुमद्भुतमुदा विजयी निजगाद कः स्तवपरोऽस्तु नव ।
ऋतवः सदा षडपि यस्य वने विदिता नमोऽत्रभवतेऽभवते ॥ १ ॥
अरुणाङ्घ्रिपाणिनयनं किरणाद्भुतकौस्तुभं बत भवन्तमिव ।
मुदिते दृशौ मम विलोकयतो मधुमद्य मात्यदरविन्दरविम् ॥ २ ॥
यदि जेतुमिच्छसि जगन्ति ततः कुरु मां करे किमपरैः कुसुमैः ।
वदति स्मरं पृथगितीव मुहुः कुसुमावलिर्भ्रमरवामरवा ॥ ३ ॥
हृदि मग्नकामशरशल्यशते बत चुम्बकं प्रियमधत्त वधूः ।
प्रतिबोधितेव मदमोहवती मधुपध्वनेः कलतया लतया ॥ ४ ॥
गदिताः किमप्यलिकुलक्वणितैः परिनर्जिताः किसलयाङ्गुलिभिः ।
दयिताजने निबिडमानभृतो निभृतं रसालतरुणा तरुणाः ॥ ५ ॥
सपदि प्रविश्य हृदि संयमिनामपि दुर्गमे विधुरतां विदधे ।
मदनावनीशवरवीर इव भ्रमरध्वनिः पिकवचःकवचः ॥ ६ ॥
अधरानुबन्धमधुरेण वधूमुखशीधुनाऽकुलवपुर्बकुलः ।
कुसुमानि यान्यधित तैः समदान् जयति स्मरो रिपुरुषा पुरुषान् ॥ ७ ॥
सहजद्विषोऽपि न विरोधमधुर्ध्रुवमाज्ञया स्मरमहानृपतेः ।
यदचुम्बि चम्पकततिर्मधुपैस्तिमिरायनैर्धुतविभातविभा ॥ ८ ॥
तिमिवत् प्रियाश्रयरसप्रचलान्मदनो निहन्तुमिव पान्थजनान् ।
नवकिंशुकान्यधित वक्रगलग्रहयन्त्रवत् प्रवरधीवरधीः ॥ ९ ॥

मलयानिलैर्विरहिणां च वधूसहचारिणां च पृथगेव ददे ।
ध्रुवमुष्णता च हिमता च फणिश्वसितोद्भवा मलयजालयजा ॥ १० ॥
पदताडनेऽप्यतुलरागनयाद्दननृत्तपल्लवकरं तदिदम् ।
सखि कान्तसन्निभमपि प्रमदं जनयत्यशोकवनमेव न मे ॥ ११ ॥
तिलकोऽपि पश्य विरहेऽस्य हहा मदनस्य बाणयति पुष्पततिम् ।
सकटाक्षविभ्रममदर्शि वृथा हृदयेशमेव समया स मया ॥ १२ ॥
प्रियनिर्विशेषमपि यस्य मया परिरम्भणं कुरुबकस्य कृतम् ।
सखि हन्ति मां तमभिगम्य मदी मदनो जगत्त्रितयशातयशाः ॥ १३ ॥
इति गद्गदाकुलितकण्ठपदं निगदन्त्य एव विरहिप्रमदाः ।
द्रुतमागतैः प्रियतमैर्नितमामतथावचोभरचिता रचिताः ॥ १४ ॥ (कलापकम्)
ज्वलिताग्निपिङ्गलकरालकराकुलभानुसाध्वससमये समये ।
क्षितिजावलीभिरुचितं रुचितं मधु पुष्पतोऽवनिहितं निहितम् ॥ १५ ॥
शितिकण्ठकण्ठकमनीयरुचेर्भवतः कठोरमहसः सदृशम् ।
विदधे शिरीषरजसाकुलितं शुचिना दिवो रविवरं विवरम् ॥ १६ ॥
शुचिना प्रियेण परिरम्भमियं रचयाञ्चकार किल केलिवनी ।
अनुरागिणी विकचपाटलया नवमल्लिकाप्रसवहासवहा ॥ १७ ॥
समयानुभावशिशिरे पतिताःस्तनतटसमूत्तय इवोडुगणाः ।
बभुराहिता विचकिलावलयो हरिणीदृशामुरसि तारमिताः ॥ १८ ॥
भृशमुचतां यदतनिष्ट महालहरीततिः पतिरयं पयसाम् ।
तदवैमि निर्भरमतामि रविच्छविमण्डलादधरया धरया ॥ १९ ॥
समये गभीरहृदयः सलिलं शिशिरीचकार बत कूपगणः ।
अजनिष्ट सम्प्रति यतः परितः सरितां गणोऽपि तपयातपयाः ॥ २० ॥
ध्रुवमालवालवलयेषु पयःपरिपूरितेषु निजमूलभुवि ।
प्रविशन्त्ययर्मा प्रतिकृतिच्छलतः पृथिवीरुहस्तपनतापनताः ॥ २१ ॥
हिमता गतेव जगतोऽर्कभिया सुदृशां कुचौ शिखरिदुर्गरुचौ ।
इति कामिनोऽनुपमशैत्यगुणस्पृहयाऽभवन् परमदारमदाः ॥ २२ ॥
नवपाटलाप्रसवलासबलादुदिते स्मरे परमया रमया ।
तरुणीततिर्मधुरमाधुरसा दयिते बभूव नतमाननमाः ॥ २३ ॥
मरुदुत्तरङ्गितपिशङ्गपटाञ्चलमञ्जुलस्य हरकण्ठरुचः ।
नव तुल्यतामकलयज्जलदस्तडिता प्रभारुचिरयाऽचिरया ॥ २४ ॥

परिरम्भणे गलदुडुप्रसवस्रजि बाढमीलितरवीन्दुदृशाम् ।
रसितो दिशां त्रिदशनाथधनुर्मिषतोऽम्बुदा नखमदुःखमदुः ॥ २५ ॥
पतति प्रकाममुडुपुष्पगणे गगनद्रुमस्य करकच्छलतः ।
रभसादघट्टयदमुं यदसौ घनपङ्क्तिर्गजममाजसमा ॥ २६ ॥
जनयञ्जने मुदमुदारतरामपि कालिमानमभजज्जलदः ।
यदनेन चण्डरुचिचन्द्रमसौ त्रिजगद्दृशामपि हितौ पिहितौ ॥ २७ ॥
प्रियवेश्ममार्गमसतीषु दिशन्निव लोकदृष्टिचकितासु घनः ।
शुशुभे मुहुःप्रकटितान्तरितक्षणिकामिषादनुपमदीपमदी ॥ २८ ॥
बहिरेव कण्टकवतीमभजत् बत केतकीमिह सुधामधुपः ।
न तदीयमप्यरसधृमरकं मनुते रसैकहृदयं हृदयम् ॥ २९ ॥
सरिदूर्मिनिर्मितमृदङ्गरवैः स्मितनीपभृङ्गकृतगीतलये ।
जगति स्मयं दिशति केकितिर्नवनृत्तलोलुपकलापकला ॥ ३० ॥
अपि सद्गुणैर्धवलयाऽबलया क्रियते न किं चतुरयाऽऽतुरया ।
वरजातिरेनमलिनं मलिनं यदसौ भजत्यसमहासमहा ॥ ३१ ॥
प्रबलप्रतापशुचिकीर्तिभृतस्तव साम्यमत्र यदि सङ्घटते ।
रुचिभारदुःसहसहस्ररुचौ शरदि प्रपञ्चितविधौ तविधौ ॥ ३२ ॥
शरदः स्फुरत्तरुणिमोष्मसदृक्तरणिद्युतेर्नवसरोजदृशः ।
सुरचापदोर्गस्रजुषः शुशुभे शशिदीधितिः परमहारमहाः ॥ ३३ ॥
सरसी निजं सरसिजैरभितः सुरभीकृतं सरसमेव जलम् ।
पथिकव्रजाय ददतीव मुहुर्विमलं सहंसरवनीरवनी ॥ ३४ ॥
पथिकाः पथि स्मृतवधूमुग्धदृग्गतिविभ्रमा मुमुहुरत्र मुहुः ।
सरितां प्रवाहमवलोक्य सरोरुहकैरवप्रसवहंसवहम् ॥ ३५ ॥
असनप्रसूनघटया घटितः कटरे शिलीमुखगणः प्रगुणः ।
विधृतक्रुधेव धुतकान्तवधूनिधनैकनिष्करुणयारुणया ॥ ३६ ॥
प्रतिदन्तिनां मदरुषा विषमच्छदगन्धिवायुनिशितान्दमिषात् ।
गगने ययुर्युगजगोत्रगजाः परिहृत्य तत्त्रिदिवनन्दिवनम् ॥ ३७ ॥
वनखण्डमण्डनमिदं सुहृदं घनकालमेनमनु मा स्म गमत् ।
शरदागमे यमिति केकिकुलं व्यथितच्छदच्छविकलं विकलम् ॥ ३८ ॥
मुनिरप्यगस्तिरुदगान्मृगयन्निव बाणपत्रनयनां शरदम् ।

इति सङ्कुचन्तु सरितोऽम्बुनिधिस्फुटदृष्टतत्प्रतिभयाऽतिभयाः ॥ ३९ ॥
ननृते शरद्यबलया वलयावलिनादभासुरमुदारमुदा ।
शुकसंहतिः कलमतो लमतो घनमार्गसीमनि रयान्निरयात् ॥ ४० ॥
परसूरमण्डलसहोत्थमहः स्खलनावलक्षमहिमैकनिधिः ।
त्वमिव प्रजासु जयति स्म महाः फलिनीषु गाढतरजातरजाः ॥ ४१ ॥
नितमां नमीषु महनीषु मुहुः कृतकापराधघटनाकुपितैः ।
मिथुनैर्मिथोऽप्यनुनयेन रसः किल कोऽपि कामकलितः कलितः ॥ ४२
विदितं यदुष्णमवटेषु पयस्त्रपया पतत्तदिह घर्मचयः ।
यदमुं विलङ्घ्य गहनं तुहिनं भुवनेऽभिभूततमभूतमभूत् ॥ ४३ ॥
रतिजानियौवनतपस्विनपावनशैलयोरिव वधूकुचयोः ।
स्थितमुष्णभावमहरन्न हिमो महिमा हि तापमततः सततः ॥ ४४ ॥
त्वरितं हुताशहरिति स्फुरितस्तपनोऽपि शीतभरभीत इव ।
ददति व्यथां न कथमन्यजने मरुतः प्रसृत्वरतुषारतुषाः ॥ ४५ ॥
मदनस्य मानिमदशैलभिदे शतधारकोणशततामगमन् ।
शतपत्रिकासु कुसुमच्छदनावलयः शतं कुसुमितासु सिताः ॥ ४६ ॥
अवियोगिनां विरहिणां च ततौ तरुणीकुचोष्मजुषि तापपुषि ।
बत सर्वथैव विफलस्य जने पवनस्य शैत्यपतितापतिता ॥ ४७ ॥
परिकम्पतेऽस्य रविभारविभादहनप्रभालिपिधराऽपि धरा ।
पवमानवल्लभमदम्भमदं हिममित्यधावत रसात्तरसा ॥ ४८ ॥
शिशिरस्ततान नव तारयशःसुरभीकृतक्षितितलस्य तुलाम् ।
नवकुन्दपुष्पपटलं यदिह त्रिदशापगाजलमितं लसितम् ॥ ४९ ॥
लघुतां प्रयाति यदहस्तदहो जलधौ प्रवेष्टुमतुलौर्वभृति ।
तुहिनातुरस्त्वरयते तुरगानपि चण्डिमप्रसविता सविता ॥ ५० ॥
परितःपतत्तुहिनदूनतनोः पुलकोद्गमद्युतिमधत्त दिवः ।
पवमानलोलितलवङ्गरजःकणराजिरत्यसितभासितभाः ॥ ५१ ॥
उष्णौ हिमोर्जितनिशातनिशागमेषु तीव्रेऽह्नि तप्ततपनातपनाशिशैत्यौ
स्त्रीणां कुचौ स्मरसमरसाः श्रयन्तः के स्युर्न हर्षसदनं सदनङ्गरागाः॥५२
आकर्ण्यैव मिथःकथामिति तयोरारामरामः क्वचित्
कोऽपि क्षोणिभृर्दादृशांस्ति तटिनीकासारसारस्थितिः ।

लोकेऽस्मिन्निति वीक्ष्य मङ्क्षु चलितः शोभाविभावद्युति
लोकेऽन्यत्र विलोकितुं तु भगवान् राजीवजीवप्रदः ॥ ५३ ॥

इति श्रीगूर्जरेश्वरमहामात्यश्रीवसन्तपालविरचिते नरनारायणानन्दनाम्नि
महाकाव्ये ऋतुवर्णनो नाम चतुर्थः सर्गः ॥ ४ ॥

गृह्णासि नाम परतोऽपि नवान् गुणांस्त्वं
त्यागो गुणस्तव नवस्तु न वस्तुपाल ।
लोकोत्तरस्तदपरस्य नरस्य स स्यात्
यत्तादृशो नहि दृशोः पथि मादृशानाम् ॥ ४ ॥

## पञ्चमः सर्गः

अथ ननाम वधूमनु पश्चिमामुदितदिग्गजकुम्भनवस्तनीम् ।
इतरदिग्गतिनिर्मितविप्रियः प्रिय इवाधिकरागधरो रविः ॥ १ ॥
विरहिणां मयि गच्छति विप्रियं प्रियजुषां प्रियमत्र करोमि किम् ।
रविरितीव चिराय विचारयंश्चरमपर्वतमूर्ध्नि विलम्बितः ॥ २ ॥
द्रुतमनुज्झिततापपरम्परोऽपरदिशा विनमन्ननुरक्तया ।
रविरसावधिरोप्य नगोन्नतस्तनतटे स्म चिरं परिरभ्यते ॥ ३ ॥
अवनतानि विमुच्य तनीयसी त्वरितमुन्नतरेषु रुचिः स्थिता ।
व्रजति भास्वति भर्त्तरि दूरतस्तदवलोकरसादिव रागिणी ॥ ४ ॥
अहमिहैव करोमि निशि स्थितिं पृथगितीव विवादरवाकुला ।
विटपिमौलिषु दत्तपदा मुहुस्त्वरितमुत्पतति स्म खगावलिः ॥ ५ ॥
अभवदर्द्धनिमीलितपद्मदृग् हिमसमीरसुखादिव पद्मिनी ।
रविमिवार्द्धलसत्कुमुदेक्षणा कुमुदिनी क्षणपातिनमैक्षत ॥ ६ ॥
विघटमानतनू नियतेर्बलादतिचलेन मुहुः परिरम्भिणौ ।
जगति हन्त रथाङ्गविहङ्गमौ न कमरोदयतां करुणारवैः ॥ ७ ॥
कनककुण्डलमेव दिवो रविर्दधदधोगलितैकलवं वपुः ।
अपरपर्वतमूर्द्धनि दूरतः पतनकूणितकोटिरिवाबभौ ॥ ८ ॥
गिरिशिरःस्थगितार्द्धमथ क्षणं द्युमणिमण्डलमस्तमदैर्जनैः ।
मुखसरोजमिवैक्ष्यत नासिकावधि दिनस्य महापदि मज्जतः ॥ ९ ॥
अपसृतं तपनेन यथा यथा तिमिरवेगभियेव शनैः शनैः ।

प्रसृतमल्पजवेन तथा तथाऽभिमुखभानुभयादिव तामसैः ॥ १० ॥
अरमताऽपरदिग्दयितां रविर्गिरिगुहागृहगुप्ततनुर्ध्रुवम् ।
मलिनिमानममानमसूयया तदितरा नितरां दधिरे दिशः ॥ ११ ॥
रविरथस्य तदात्वमलक्ष्यतां गतवतश्चरमाचलसीमनि ।
अरुणकेतुपटाञ्चलचञ्चलं क्षणमलक्ष्यत मान्ध्यमहो महः ॥ १२ ॥
अथ मलिम्लुचदौस्थ्यलतादवैश्चलदुलूकविलोकनभास्करैः ।
अभिसरत्कुलटाकरदीपकैः जगदपूरितमां तिमिरोर्मिभिः ॥ १३ ॥
झपदि दिक्षु किमु क्षुभितोऽम्बुधिर्नभस एव विभा किमलम्बत ।
किमुरगैरुदपाति रसातलादिति जनेन तदाऽनुममे तमः ॥ १४ ॥
रविकरोद्धृतिमुक्तमिलातले किमपतद्वियदेव मलीमसम् ।
क्व पतितो रविरित्यवलोकितुं घनपथेऽधिरुरोह धरैव किम् ॥ १५ ॥
किममिलन्मलिनीकृतमूर्त्तयस्तपनभर्त्तृशुचा ककुभोऽभितः ।
तिमिरनिर्विवरे भुवनेऽभितो भविभिरित्यभिशङ्कितमाकुलैः॥१६॥(युग
गगनकाननसीमनि तारकैः कुसुमितासु तमोनववल्लिषु ।
अजनि युक्तममी कुसुमायुधश्रिजगतीविजयव्यसनोन्मुखः ॥ १७ ॥
प्रियनिकेतनवर्त्मनि चञ्चलैश्चलितमस्खलितं कुलटाकुलैः ।
प्रसृमरे तिमिरेऽपि नवज्वलन्मदनदीपविभाभरभासिभिः ॥ १८ ॥
अनुदिने सति तत्क्षणसौरभीप्रियतमे च गते च रुचिप्रिये ।
प्रियवियोगजदुःखमसर्वी तदा रुचिरशिश्रियदोषधिमण्डलीम् ॥ १९
रविभटैरिव सद्मसु दीपकैर्हतमधःस्थितकालिमकैतवात् ।
हठहतस्य तदा तमसस्त्वचा विरचिते नियतं स्थितमासने ॥ २० ॥
हिमकरागमनप्रगुणा नमश्चिहुरसञ्चयमध्यमसीमनि ।
अदित वासवदिक् प्रसृतप्रभालवनिभेन तदा घुसृणच्छटाम् ॥ २१ ॥
प्रियतया नलिनी यदि मूर्च्छिता निपतिते तरणौ किमु कौतुकम् ।
महदिदं यदलिध्वनिनाऽरुदत् कुमुदिनी प्रसरत्कुमुदानना ॥ २२ ॥
गिरिशिरोऽन्तरितस्य हिमद्युतेर्द्युतिभरः कपिशो बहलीभवन् ।
अदहदाशु वियोगिवनावलीं स्मरशिखीव दवत्वमुपागतः ॥ २३ ॥
विघटितेऽपि निदाघरुचौ हिमद्युतिकरप्रसरेऽपि विसर्पति ।
न सरसीभिरमोचि कदुष्णता नवरथाङ्गविहङ्गमतापतः ॥ २४ ॥
स्वसदृशीकिरणवनकिशोरकं यवनिमानगजेन्द्रमिताङ्कुशः ।

स्मरधनुर्द्धरजैत्रधनुर्बभौ समुदितैकलवः क्षणदाधवः ॥ २५ ॥
अथ निपीय तमिस्रसुरारसं भृशममोचि दिशा नमुचिद्विषः ।
उदयदर्द्धसुधाकरकैतवात्कनकशुक्तिरिवेयमधोमुखी ॥ २६ ॥
प्रथमधामलवैर्विरलीकृतं दिवि निरीक्ष्य तृणप्रतिमं तमः ।
नियतमुत्पतताङ्कमृगेण स प्रकटितः सकलोऽपि विधुर्बलात् ॥ २७ ॥
शशिनि शोणतनौ स्फुटलाञ्छने वलयिते परितस्तिमिरोर्मिभिः ।
अलिकुलाकुलपङ्कजवासजं सुखमसेव्यत सायमपि श्रिया ॥ २८ ॥
तिमिरसीधुरसप्रसरारुणे त्वयि मुधाऽजनि रागिमतिभ्रमः ।
शठ मया परिरम्भपरोऽपि यद्वितनुषे रजनीमुखचुम्बनम् ॥ २९ ॥
इति सुरेन्द्रदिशेव रुषा हतः सितरुचिः पतितो वियदङ्गणे ।
अथ विकस्वरकोमलकौमुदीपरिमलैरवशेषदिशोऽहसन् ॥३०॥ (युग्मम्)
दिवि निशाकरकान्तिभिराहतं गिरिगुहासु महौषधिभिः क्षितम् ।
निपतितं त्रसदन्धतमं तमो जलपतौ तदिहोत्पतितं पयः ॥ ३१ ॥
निजसुताः परिदातुमिवौषधीर्गिरिगणो विधुकान्तजलैर्व्यधात् ।
शुचिकलावलिसंवलितद्युतेर्द्विजपतेर्ननु पादपवित्रताम् ॥ ३२ ॥
जनदृशां सुकृतार्णववीचिका इव हिमांशुमरीचिझलज्झलाः ।
क्रमसमीकृतविश्वनतोन्नताम्रिजगतीं परितस्तरिरेतराम् ॥ ३३ ॥
कटरि काचन पादपवित्रता द्विजपतेः परमेशशिरोमणेः ।
अबिभरुर्मलिनान्यपि गौरतां यदभिषङ्गकृतैः सुकृतैरिव ॥ ३४ ॥
मदनयान्त्रिकयन्त्रजवोज्झिते स्फटिकगोल इवोच्छलिते विधौ ।
सपदि भङ्गभियेव पलायितं मृगदृशामभिमानमहाबलैः ॥ ३५ ॥
न निकरोषि वचांसि ममेत्यसौ स्मरवशंवदधीः प्रजिघाय माम् ।
अनुनयाय तवायतदृक् पुनस्त्वदपमानभिया स्वयमेति न ॥ ३६ ॥
स्मरशरावलिविद्धहृदन्तरा गलितमानरसप्रसृतिभृशम् ।
अयि भवन्मयमेव विलोकते जगदिदं विरहज्वरपीडया ॥ ३७ ॥
असुसदृक् ननु भासि तदन्तरा तदिह कण्ठगतिस्त्यज विग्रहम् ।
सपदि विग्रहमुक्तिरसोन्मुखास्तदसवोपि हि कण्ठपथं ययुः ॥ ३८ ॥
प्रियजनं ननु मन्मुखवाचितप्रणतिचाटुगिरं लघुमानय ।
त्यज मदं पदयोः पतितास्मि ते तदनुकारपटुश्चटुभाषिणी ॥ ३९ ॥
स्मरनिशाकरयोरपि शङ्करज्वलनदृष्टितिरस्कृततेजसोः ।
त्वदभिमानभिदोन्मदयोः पुरस्त्वमिति मामतिलज्जयथाः स्म मा ॥४०॥

इति निशातिलकायितकौमुदीरमणरश्मिगलन्मदयोर्मिथः ।
अनुनयं कथमप्यतिवाञ्छतोर्वियमितानुनयप्रथयोः स्वयम् ॥ ४१ ॥
अनुदितापि सखी चतुरा चिरादुभयतोऽप्यनुनायकतां गता ।
प्रणयिनोः प्रणयातुरचित्तयोरधित मानविभेदनिमित्तताम् ॥ ४२ ॥
(सप्तभिः कुलकम्

अथ समेततथाविधदूतिकानुनयदत्तमुदोऽपि मनस्विनः ।
प्रतिभयादपराधकृतो ययुः प्रियतमासदनाय शनैः शनैः ॥ ४३ ॥
विशति सागसि भर्त्तरि दर्पणो मुखविलोकमिषाद्विधृतोऽन्तरा ।
मृगदृशो मदभेदनिवेदिना सपदि वेपथुना भुवि पातितः ॥ ४४ ॥
प्रणयिनाभ्युदितेन कृतागसा सपदि कापि पराङ्मुखतां गता ।
स्फटिकभित्तिगतत्प्रतिमेक्षणाद्विवलिता स्म पुरः परिरभ्यते ॥ ४५ ॥
द्रुतमभिप्रियमुत्थितयाऽन्यया रणितनूपुरकङ्कणकाञ्चिभिः ।
स्मरविलासकलारसनाटिकामुखमहोत्सववाद्यमिवादधे ॥ ४६ ॥
रभसचञ्चलकुण्डलताडितो न खलु गोत्रभिदामश्रृणोद्वधूः ।
सरसविप्रियकम्पिततो प्रिये किमपि सात्त्विकभावमशङ्कत ॥ ४७ ॥
अनुनयाय विलीनमदौ मिथः प्रचलितौ मिलितौ पथि सङ्कटे ।
प्रणयिनावुदितप्रमदत्रपं सपदि केन रसेन न भाविनौ ॥ ४८ ॥

एकाकिन्यपि कामभूपतिमहासाहाय्यतो मानिना-
मीदृङ्मानधनग्रहव्यतिकरव्यग्रे सुधादीधितौ ।
दायादीव जवाददौकत तदाहङ्कारहुङ्कारिणी
सौरभ्याभिसरन्मधुव्रतवधूनादेन कादम्बरी ॥ ४९ ॥

इति श्रीगूर्जरेश्वरमहामात्यश्रीवसन्तपालविरचिते नरनारायणानन्दनाम्नि
महाकाव्ये चन्द्रोदयवर्णनो नाम पञ्चमः सर्गः ॥

करसरसिरुहं ते वासवेश्म श्रियोऽभू-
दजनि वदनपद्मं सद्म वाग्देवतायाः ।
इह जगति समस्ते वस्तुपाल स्तुमः कं
सचिवतिलक धन्यं त्वद्वदान्यं वदान्यम् ॥ ५ ॥

# षष्ठः सर्गः

अथ नलिनमुखी निजं च भृङ्गध्वनितेनावसरं सुराशशंस ।
रसरसनरसं मुखं च यूनां चषकानि स्वयमाप बिम्बितेन ॥ १ ॥
अधरमधुरताद्भुतानि नूनं दयितास्यानि निरीक्ष्य बिम्बितानि ।
नवसरकरसेषु दम्पतीनामभवत् कापि विशेषतः पिपासा ॥ २ ॥
धुरि मधुरिमबन्धुरं वधूनामधरोष्ठं पिबति प्रियेऽनिरागात् ।
मिलदलिनिनदै रुरोद मन्ये निजपानावसरं सुराप्यनाप्य ॥ ३ ॥
इदमयमथवा दधाति धुर्यं ननु माधुर्यमितीव बोद्धुकामाः ।
सरसमरसयन्मुखं च वध्वा नवमध्वासवमप्यथो युवानः ॥ ४ ॥
मधुरमधुमधीरमर्द्धपीतं वितरन्त्याश्चषके च्युते प्रकम्पात् ।
मुकुलितनयनं धृताधरोष्ठो मुखगण्डूषमपात्कृती प्रियायाः ॥ ५ ॥
न रसनरसमाससाद भृङ्गीरवलीलाजुषि तादृशं सुरायाम् ।
मणितरवपुषोऽधरे प्रियाया हृदयेशः किल यादृशं प्रपेदे ॥ ६ ॥
मुहुरपि सरकं निपीय कान्ताधरपाने मणितानि यद्वितेनुः ।
मधुरमिदमितोऽप्यतीव कण्ठैः स्तवनं चक्रुरितीव तद्युवानः ॥ ७ ॥
जितमिव मधु मेनिरे वधूनामधरैः पानकृतः परीक्षमाणाः ।
विधुमणिचषकैरितीव दध्रे जयबुद्ध्यैव सुधा सुधांशुधौतैः ॥ ८ ॥
रसयति सरकं धवे वधूनामधरोष्ठो मधुपैरवापि धन्यैः ।
मुहुरिह दयिताधरं च रागाद्रयति प्रापि सुराऽपि नैर्विदग्धैः ॥ ९ ॥
मधु सरभसमौज्झदात्ततापा युवतिर्गोत्रभिदा प्रियेण दत्तम् ।
दधति तदधरे च शीधुधौतान्दशनाङ्कानपरापि तापमाप ॥ १० ॥
अधित कमपि कान्तयार्द्धपीतोऽधरसङ्गेन रसं सुरारसस्तम् ।
अमदयदपि भाजनस्थितोऽसौ रसनोपक्रमिणोऽपि येन यूनः ॥ ११ ॥
स्फुरदरुणदृशश्च्युतोत्तरीयाः सहसार्द्धोक्तगिरोऽभिपेतिमस्याः ।
अभिनवमददैवनावतारात्परतन्त्रा विजुघूर्णुरायताक्ष्यः ॥ १२ ॥
मदवशकपिशं मिथोऽपि वक्षः सहसा वीक्ष्य रसत्रसद्विचाराः ।
कथमिव मयि कोपभागसीति प्रणता दम्पतयस्तदानुनिन्युः ॥ १३ ॥
दयितमधरचुम्बनाय धृत्वा चिहुरैर्वीक्ष्य च सन्निधौ विपक्षम् ।
क्षिपसि किमिह चक्षुराक्षिपन्ती करभोरुरिति लाघवं लुलोप ॥ १४ ॥

हृदि मधुकृतमोहनाभिलाषे त्रपयेव त्रपयापि मङ्क्षु मुक्ते ।
अजनि लसदनङ्गमङ्गनानां परिहासोऽभिमतैः सहस्तताल: ॥ १५ ॥
क्षणमतिकुपिताः क्षणं प्रसन्ना हसिताश्च क्षणमाकुलाः क्षणं च ।
नवनवरसभङ्गिभिर्मृगाक्ष्यो हृदयं नूनमनीनृतन् प्रियाणाम् ॥ १६ ॥
अविरतमधुपानधौतरागस्फुटदन्ताङ्कधरोऽधरस्तरुण्याः ।
अपरमृगदृशि प्रकोपनायामिव मङ्क्षोपयितुं पपे शठेन ॥ १७ ॥
समधुरगुणया ह्रियं हरन्त्या प्रतिकान्तं सुरयैव कापि मुग्धा ।
चटुवचनमघाटि मन्दमन्दं स्वयमन्तर्गतया वयस्ययेव ॥ १८ ॥
मदपरवशचेतसां वधूनां द्रुतमुक्तोज्झितमन्द्रमध्यतारैः ।
प्रतिपदमनवस्थितप्रयोगैरपि गीतैर्दधिरे मुदं युवानः ॥ १९ ॥
युवतिषु मृदुगायतीषु रागाच्चषकं रागिषु वादयत्सु रिक्तम् ।
इह शरधनुषी विमुच्य मूर्तो ध्रुव नृत्यन्निव दिद्युते मनोभूः ॥ २० ॥
चिरविरचितचुम्बनप्रपञ्चादधराच्चारुदृशामुदस्य रागम् ।
अभिमुखपतितेषु तन्वते स्म प्रतिकान्तानयनेषु रागभाजः ॥ २१ ॥
इह तिष्ठति सा नवेति सेर्ष्यं निगदन्ती किलमानमत्यजन्ती ।
स्मररसविवशा वधूर्घनाभ्यां हृदयं पत्युरपीडयत्कुचाभ्याम् ॥ २२ ॥
हरति रमणेंऽशुकं रमण्या हृदयं व्रीडभरेण वा मुदा वा ।
विपुलकपुलकोद्गमैर्दधौ वा परिधानं परिरब्धुमुच्छ्रितं वा ॥ २३ ॥
स्पृशति परिवृढे कुचद्वयीं यत्त्रपया सङ्कुचनं चकार भीरुः ।
तमनुदरतया तदुच्चमुच्चैर्हृदयं प्रत्युत ढौकयाञ्चकार ॥ २४ ॥
हृदयनिमभितः शनैः स्पृशद्भिर्मृदुविस्तारितपाणिलीलयैव ।
कथमपि सुदृशामलभ्यतात्मा युवभिर्युक्तमहो मुहुः स्मरान्धैः ॥ २५
निबिडतररदाङ्कपीड्यमानाद्दयितेन प्रसभं कृतागसाऽपि ।
तरुणमृगदृशां ततो प्रविष्टोऽधरबिम्बात्किल कोपकम्प एव ॥ २६ ॥
रभसदलितहारसापराधः परिरम्भः सहसैव दम्पतीनाम् ।
सकलमपि वपुः प्ररूढमुक्तास्तबकं स्वेदपयोलवैश्चकार ॥ २७ ॥
अधित कृतकमेष यं पुरा मज्जयहेतोरपनेष्यते स रागः ।
इति भृशमधरे निपीयमाने रमणैः पाणियुगं ननर्त्त वध्वाः ॥ २८ ॥
दयितकरतलैर्यदि प्रपेदे सकलैः स्पर्शवशादतीव तोषः ।
पृथगिव तदपि स्तने तरुण्याः प्रमदश्चूचुकसङ्गजोऽनुभूतः ॥ २९ ॥

प्रियतमकरपल्लवेन नूनं परमानन्दपदं व्यचिन्ति किञ्चित् ।
युवतिकुचशिलोच्चयादधस्ताद्विदधौ भैरवपातसाहसं यत् ॥ ३० ॥
अतुलकुचनितम्बशैलसीम्नि स्फुटनाभीह्रदभाजि कान्तहस्तः ।
चकित इव चचाल कम्पमानः शनकैर्मध्यपथे कृशे कृशाङ्ग्याः ॥ ३१ ॥
स्खलित इव वलीविलङ्घनेन प्रियपाणिः पतितश्च नाभिकूपे ।
कृतवलयविरावमाकुलाभ्यां चकृषे च द्रुतमङ्गनाकराभ्याम् ॥ ३२ ॥
रसवशगवधूकरानिरुद्धे प्रियपाणौ हरति क्षणेन वासः ।
प्रसृतमधुरसार्द्रितेन दध्रे जघनेन स्वयमेव लज्जयेव ॥ ३३ ॥
वसनमिदमिति प्रकीर्णकान्ती''' रपनेतुरेव नेतुः ।
करमरुधदहो करेण कान्ता गलितं पूर्वमजानती दुकूलम् ॥ ३४ ॥
भुजयुगदृढबन्धनेन यूनां रससर्वस्वमदीदृशन् रमण्यः ।
त्वरितमिदमिमेऽपि बाढमूरुद्वयसन्दंशनिपीडनेन नामाम् ॥ ३५ ॥
हृदयमतिवशीकृतं मिथोऽपि स्फुटमानग्रहनिग्रहश्च चक्रे ।
असमशरगुरूपदेशमन्त्रैरिव कण्ठे मणितारवैर्युवभ्याम् ॥ ३६ ॥
अशिथिलपरिरम्भतो दधानाः पिहितं दम्पतयो मिथोऽङ्गमङ्गैः ।
अधरमथ दृशं मुहुश्चुचुम्बुर्मुखसौन्दर्यमलोकयन्मुहुश्च ॥ ३७ ॥
वसनविनयने करावरोधं परिरम्भे विकृतिं भ्रुवोऽभिमानात् ।
अधररसनसम्भ्रमे तु चक्रुश्चटुवाचं सुदृशो रसाय यूनाम् ॥ ३८ ॥
कलयति कलतां प्रियं च वश्यं विदधाने मणिते नितम्बिनीनाम् ।
स्वयमकृत कृती न कार्मुकज्याग्रहटङ्काररवं ह्रियेव कामः ॥ ३९ ॥
सुरतगतिषु दर्शयन्मुखाब्जं नववध्वा वसनास्तदीपकायाः ।
सततमपि मणिर्हृतः स्वमूर्ध्ना समये प्रत्युपकृद्बभूव यूनः ॥ ४० ॥
गलितसकलतन्तवोऽपि हारा गुणपूर्णा इव भूषयाम्बभूवुः ।
दृढतरपरिरम्भणेऽङ्गमग्नस्फुटमुक्तामणयो रत्नानि यूनाम् ॥ ४१ ॥
परिदलनभयादिवाशुमुक्तस्तनसङ्गो गलकन्दलावलम्बी ।
पुरुषरतकृतां लुलन्वधूनां स्मरदोलाललितं बभार हारः ॥ ४२ ॥
परिचितपुरुषायितप्रपञ्चा मृदुलीलालसदङ्गकास्तरुण्यः ।
हृदयविस्मृमरैरुरोजकुम्भैररुचन्प्रेमरसार्णवे तरन्त्यः ॥ ४३ ॥
रुचितमभिमतेषु यद्यदासीत्प्रमदास्तत्तदनुक्तमेव चक्रुः ।

हृदयमपि विदन्त्यमूर्यदेषां नियतं सन्ततमन्तरा वसन्त्यः ॥ ४४ ॥
अपि घनजघनस्तनास्तरुण्यो दधिरे लाघवमिष्टतुल्यमेव ।
इति दयितमुखश्रमाम्बुपातैरभिषिक्ता रतसङ्गरे स्मरेण ॥ ४५ ॥
प्रियहृदयवशीकृतिप्रतिज्ञाभरभाजो मणितस्य कामिनीनाम् ।
निधुवनधुतभूरिभूषणालीरववारः परिवारतां जगाम ॥ ४६ ॥
रचितकृतकमानधैर्यलज्जा मुहुरङ्गीकृततुष्टिभावधार्ष्ट्याः ।
प्रणयिनि परिभोगभाजि वध्वः सहसा सञ्चुकुचुर्ददुस्तनुं च ॥ ४७
अलमलमिति वाचमाचरन्त्यो रभसं तु प्रसभं रते वहन्त्यः ।
कृतकरुदितचश्चवोऽपि चश्चचटवो यूनि मुदं ददुस्तरुण्यः ॥ ४८ ॥
करुणभणितिसीत्कृतानुगर्भं वचनं मन्दमिति प्रिया यदूचुः ।
मदनमदवशंवदा युवानो दधिरे तेन विशेषनिर्दयत्वम् ॥ ४९ ॥
क्षणमुपचितचाटुदीप्तकम्पं विलुलत्कातरमीलदर्धनेत्रम् ।
समरतसुखवाञ्छयैव यूनो रभसः कोऽप्यनिवाक्पथो बभूव ॥ ५० ॥
सुरतविरतिखेदितं कपोलौ परिरभ्य स्थितमेव रागियुग्मम् ।
नवमिव विरराज चम्पकस्रग्मयधम्मिल्लसमीपमोरभेण ॥ ५१ ॥
कटरि विघटनोत्सुका युवानः सुरतान्तेन वधूजनेन मुक्ताः ।
मणितराणितचाटुचुम्बनाद्यैः समनीयन्त च ते पुनर्नवत्वम् ॥ ५२ ॥
रभसभरगृहीतपट्टवासःपिहितोरू रमणी रयादुदस्थात् ।
विवलितवपुरेकपादपार्ष्णिगभ्रमितद्यत्कुचवञ्चितेष्टदृष्टिः ॥ ५३ ॥
अवयवनिवहेषु दम्पतीनां नखलक्ष्माणि निरन्तरस्थितानि ।
विषमशरविमुक्तपञ्चबाणीपदलीलामवहन्त पञ्च पञ्च ॥ ५४ ॥
प्रथममविदितानि दानकाले दृढदत्तान्यपि रागिणां रसेन ।
नखदशनपदानि मन्दमन्दं पवनस्पर्शवशेन जानते स्म ॥ ५५ ॥
ध्रुवमभवदशेषभूषणानामपि भूषाकरमङ्गमङ्गनानाम् ।
विरहितमपि तैरिदं यदाभात् रतमर्दे तु न तानि तच्च्युतानि ॥ ५६
जघनमनिघनं निरीक्ष्य सद्यः श्रमजस्वेदजलार्द्रचीरदृश्यम् ।
मुहुरपि रतये प्रियोऽधितल्पं परिरभ्य प्रमदां मदान्निनाय ॥ ५७ ॥

इत्थं नितान्तरतरागविशेषकान्त-
कान्तीनि वीक्ष्य वनितावदनानि चन्द्रः ।

सद्योऽभिभूत इव लज्जितचित्तवृत्ति-
र्झंपां विधातुमपराम्बुधिमभ्यधावत् ॥ ७८ ॥

इति गूर्जरेश्वरमहामात्यश्रीवसन्तपालविरचिते नरनारायणानन्दनाम्नि
महाकाव्ये सुरापानसुरतवर्णनो नाम षष्ठः सर्गः ॥ ६ ॥

इतरगुणकथायाः काथिकत्वस्पृहाया-
मिह वहति सहास्यं कस्य नो लास्यमास्यम् ।
तव तु विततकीर्त्तेः कीर्त्तनं कर्त्तुकामः
सुरगुरुरपि शङ्के वस्तुपाल त्रपालुः ॥ ६ ॥

— —

## सप्तमः सर्गः ।

ाति स्म वेल्लितलताकुसुमोऽतिमन्दमन्दोलनर्त्तितुषारतुषारवनारः ।
तश्रान्तकान्तरतखेलनखिन्नकान्तासङ्कल्पकल्पविटपीव निशान्तवायुः ॥ १ ॥
ासादवेदिषु निरन्तरमन्तरिक्षकुक्षिम्भरिः स्फुरितमाप मृदङ्गनादः ।
ामप्रणुन्नमिव शीतमरीचिबिम्बमालम्बत स्वलितडम्बरमम्बरान्ते ॥ २ ॥
चेत्तेशचार्डचयचन्द्ररुचिप्रपञ्चपञ्चेषुचापकलयापि न यः प्रयातः ।
ानं विभिद्य तमपि प्रमदासुशब्दैः शब्दायुधत्वमदधाच्चरणायुधोऽपि ॥ ३ ॥
वप्ने निरीक्ष्य चरणप्रणतं युवानं सद्यः प्रसादरभसादुषसि प्रबुद्धा ।
भ्यागतं चकितमेव चिराय काचिदाश्चर्यमग्नमनयत्परिरभ्य तल्पे ॥ ४ ॥
्यावधिर्दधिविलोलनलोलकान्तानाडङ्ककङ्कणकलापकलापनादः ।
नेर्मग्नमन्थरवराशिरसो युवानं स्मेरस्मरं स्मरयति स्म रतोत्सवानाम् ॥ ५ ॥
ारस्वतस्मृतिशुचौ कविपुङ्गवानां चित्ते स्फुटस्फुटिकदर्पणदर्पचौरे ।
ाग्देवता स्वयमियं प्रतिबिम्बितेव शुद्धा मतिः प्रभवति स्म कवित्वतत्त्वे ॥ ६ ॥
ाज्ञं पयः कतिपयेऽपि निपीय हन्तुमन्तर्गतान् गिरिगुरूनपि रोगपूगान् ।
्ध्युः प्रगे शुभमुदर्कमुदस्तनिद्राः सुस्वप्नलब्धिमुदिता इव बुद्धिभाजः ॥ ७ ॥
संवर्धितो मधुरवारिविमुक्तवाहहेषारवैर्झगिति जागरयाञ्चकार ।
सुप्तोत्थितद्विपपदान्दुकवृन्दनादो बन्दीश्वरस्वरपिधानपटुर्नरेन्द्रान् ॥ ८ ॥
सूर्याश्वपादचयचूर्णितपूर्ववार्धिवेलावनान्तमणिरेणुरिवोत्पतिष्णुः ।
ाच्यां प्रभापरिचयो विचकास किञ्चित्कुप्यच्चकोरकुललोचनकोणशोणः ॥ ९ ॥
श्रीचन्दनद्रवमिवाशु हिमांशुधाम निर्धूय कौतुकवती बत वासवी दिक् ।

आरक्तविस्तृतरविच्छविकैतवेन काश्मीरजेन रजसा विभवं बभार ॥ १० ॥
गुप्तो रसान्निशि भृशं परिभुज्य नीलीरागः कलक्वणितमञ्जुरलिर्नलिन्या ।
धामाधिपे द्रुतसमागमभाजि किञ्चिदुद्घाटितच्छदकपाटपुटं निरासि ॥ ११ ॥
अन्तर्लुलत्तरलभृङ्गकनीनिकेन किञ्चित्पयोलवभृतार्द्धनिमीलितेन ।
तेने मुदं कुमुदिनीकुमुदेक्षणेन अस्यत्करो हिमकरोऽपि रतादिवाभूत् ॥ १२ ॥
संसक्तकज्जलमितिद्युति मूर्ध्नि पात्रं यन्त्रं तमोभिरिव क्लमवेक्ष्य दीपाः ।
तैले प्रलायिनि भयादिव मल्लिकायाः पाश्चात्यभागमभजन्त दशां दहन्तः ॥१३
अस्मद्विभुर्दिवमियाय रविर्नवेति ज्ञातुं महौषधिनतेरिव निःसृताभिः ।
त्यक्तानि कान्तिभिरुदग्रगिरीन्द्रकुञ्जदुर्गाण्यपूरयिषत त्वरितं तमिस्रैः ॥ १४
रागो रथाङ्गमिथुनस्य मिथोऽभिषङ्गप्रीतिस्पृशो भृशममानिव मानमान्तः ।
भूत्वा बहिर्बहुविभानविभातरङ्गरङ्गच्छलाद्गगनगर्भमपूरि भूरिः ॥ १५ ॥
दायादता विदितवैरिणि नित्यमिन्दौ मन्दायितामृतकले किल भूमिमुक्ते ।
एकेन चन्द्रवदनावदनोपमानलक्ष्मीरलाभि कमलेन विकस्वरेण ॥ १६ ॥
नक्तं भरेण परिभुज्य सुधाकरेण त्यक्ता च्युतप्रसववन्दनमण्डनेव ।
प्रातः क्षणं गलिततारकचक्रवाला निश्चन्द्रिकाननितरनीव विदिद्युते द्यौः ॥ १७
अस्तु क्षणं हृदि मम प्रमदप्रदोयं नैनं जनोपि कलयिष्यति सान्ध्यभासा ।
इत्युन्मुदः प्रियतमाहृदयाङ्गरागं लग्नं बभञ्जुररुणं तरुणा न यान्तः ॥ १८ ॥
म्लानं विमुच्य कुमुदं चिरभुक्तमस्य द्वेष्ये प्रयातु नलिने मलिनः षडङ्घ्रिः ।
धिग्धिक् पुनः सुनयनावदनांशुपानध्यानः सुधारुचिममुञ्चदमुं चकोरः ॥ १९
आनन्दितो दिनमुखे खलु वीक्ष्य पक्षिराजाग्रजं तपनसूतमुपेतमग्रे ।
अभ्युत्थिताः पटुगिरस्तरुविष्टरेभ्योऽपृच्छन् सुखागमकथामिव पक्षिणोऽमी ।
पूर्वाङ्गनातनुनखक्षतमण्डनाभस्तोकोदितद्युमणिमण्डलखण्डदम्भात् ।
वक्रीकृतेन दिवसः प्रसभं चकर्ष ध्वान्तस्य जीवितमिवाङ्गुलिपल्लवेन ॥ २१ ॥
नारङ्गरङ्गमुदयाचलतुङ्गशृङ्गगुप्तार्द्धमम्बरमणेर्विरराज बिम्बम् ।
उल्लासितांसपिहितैकतटं हिरण्यताडङ्कपत्रमिव पूर्वदिगङ्गनायाः ॥ २२ ॥
उत्तानदानवकदम्बकडम्बरेण ध्वान्तेन तान्तमवगम्य जगत्समग्रम् ।
अब्धेर्विमुक्तमिव चक्रधरेण चक्रं चक्राम शक्रदिशमम्बररत्नबिम्बम् ॥ २३ ॥
जाग्रत्कलङ्कहरिणाङ्कमिषात्प्रतीच्यां सज्जीचकार रजतप्रचितं प्रचेताः ।
भानौ विभूषयति भासुरभासि पूर्वां दूर्वाङ्कुरप्रकरकर्बुरमर्घपात्रम् ॥ २४ ॥
प्रातर्जगत्यभिनवोत्सवभाजि गीतस्फीताननासु नलिनीष्वलिनीनिनादैः ।

आबिभ्रती घुसृणपात्रमिवात्र भानुं शोभामसृज्यत मुखेषु दिशां दिनश्रीः ॥२५॥
याचिष्यते जगति दुर्लभमप्ययं यद्दास्ये तदस्य नवनिर्भरभक्तिभाजः ।
ध्यात्वेति भानुरुदयी मुदितः किलाभूदर्घाञ्जलिप्रनिमया पुरतो जनस्य ॥ २६ ॥
उद्दीप्तपश्चिमशिलोच्चयचूलचुम्बिचञ्चन्नभोमणिमणिज्वलनप्रतापैः ।
शङ्के क्रमेण कलया कलया गलित्वा प्रातस्तुषारकिरणोऽजनि कीर्त्तिशेषः ॥२७॥
संरम्भतस्त्रिजगतीभवनान्तराले तूर्णं चचाल निखिले खलु वासरश्रीः ।
रागो निरन्तरतरस्तदयं रराज तत्पादयावकरसप्रसरैरिवास्मिन् ॥ २८ ॥
अम्भोरुहेऽपि बत गर्दभिकेऽपि तुल्यं रागं यदि व्यतनुत प्रभुरेव भानुः ।
आद्यं तथापि सविशेषमुखानुरागं साक्षादभूव कलुषं मुखमुद्रयाऽन्यत् ॥२९॥
बालांशुमालिकरमण्डलमण्डनेन बन्धूकबन्धुरतरं दधती शरीरम् ।
छायावलीवलयिना च नवप्रवालवैडूर्यजालघटितेव बभौ त्रिलोकी ॥ ३० ॥
धिग् रागवानहमिहापि सुरेभकुम्भादस्याः स्तनौ प्रणयवानधिरोहतीन्द्रः ।
एवं रुषेव तरणिः परितापमाप्य पूर्वामसुञ्चन दिवं च रुचा सिषेवे ॥ ३१ ॥
विस्पष्टदृष्टपरमाणुविलासनालैर्जालान्तरप्रसृमरैर्नवरश्मिदण्डैः ।
भल्लैरिव द्युमणिनापहृतं गृहान्तर्ध्वान्तं स्रुतक्षतमलक्ष्यत रक्तचन्द्रैः ॥ ३२ ॥
निःशेषभूमिधरकन्दरमन्दिरान्तर्गर्वाङ्कुराण्यपि जघानतमां तमांसि ।
स्फोडदर्कमणिविस्तृतवह्निकीलालीलायितेन सहसा सहसामधीशः ॥ ३३ ॥
दीप्तार्ककान्ततलतापविलीनहेमक्ष्माभृन्नवीनविवरावलिलब्धमार्गाः ।
वभूविभूषणमहर्मणिरश्मिपाताः पातालमूलतिमिराण्युदमूलयन्त ॥ ३४ ॥
रक्तं निरङ्कुशतया कुशसंनिभेवा यः सर्वतस्त्रिभुवनेपि समो कथंचित् ।
गाति स्म सोपि दृशि घूकविहङ्गमस्य भानोर्भयात् झगिति सङ्कुचितोऽन्धकारः ३५
पूर्वावनीधरशिरस्तटधातुरागः प्राचीनदिग्युवतिमौलिजपावतंसः ।
वो वियद्गिरिशमूर्तिकृशानुनेत्रं भानुः क्रमाच्छविभरं बिभराम्बभूव ॥ ३६ ॥

इत्येनां रजनीं रसाञ्चितमिथोवार्त्ताभ्यसूयात्रस-
न्निद्रौ निर्गमयाम्बभूवतुरतिप्रेम्णा मुकुन्दार्जुनौ ।
प्रीतो रैवतकावनीधरवनीदेशाय साकं पुरी-
लोकैराशु चचाल तत्परिचयोत्तालश्च तालध्वजः ॥ ३७ ॥

इति श्रीगूर्जरेश्वरमहामात्यश्रीवसन्तपालविरचिते नरनारायणानन्दनाम्नि
महाकाव्ये सूर्योदयवर्णनो नाम सप्तमः सर्गः ॥

जनव्यामोहवल्लीयमिन्दिरा मन्दिरे स्थिता ।
मन्त्रिणा वस्तुपालेन कल्पवल्ली विनिर्मिता ॥ ७ ॥

## अष्टमः सर्गः

हैमे रामः स्यन्दने चन्दनश्रीर्नीलं चेलं धारयन्नारुरोह ।
शोणश्रीके लक्ष्यलक्ष्मेव सद्यः सन्ध्याभिन्ने वारिदे शारदेन्दुः ॥ १ ॥
चक्रे कृष्णालोकतृष्णाय हृर्नि लोकायेव स्यन्दनः सात्वतस्य ।
वातापातप्रस्फुरत्केतुहस्तप्रायो जाग्रद्धाहशब्दप्रवाहः ॥ २ ॥
नो माति स्म व्योमपात्रेऽप्यमात्रो यात्रारम्भोत्तानतिस्वाननादः ।
स्थानं कर्त्तुं तुङ्गतुङ्गानि भूभृच्छृङ्गाणीति भ्रंशयामास मन्ये ॥ ३ ॥
रत्नश्रेणीभासि शाले विशाले तेजोजालैरप्यलक्ष्यां प्रतोलीम् ।
सैन्यान्यापुः सम्मुखायातवातव्रातज्ञातद्वारदेशावकाशम् ॥ ४ ॥
वेगेनाहम्पूर्विकायानमानस्फूर्तैः सूतैस्तुल्यकालं विमुक्ताः ।
अन्योन्यस्य स्यन्दना घट्टमानाः प्राकारस्य द्वारदेशान्निरीयुः ॥ ५ ॥
रेणौ वाहव्यूहखाते प्रभूते पङ्कीभूतैर्दन्तिदानाम्बुपूरैः ।
वेगाद्धप्रहारतोऽकुण्ठशक्तिक्षिप्रैः पादैरुत्तरन्ति स्म भृत्याः ॥ ६ ॥
व्यक्तं रिक्तो नैव केनापि पूर्णे तूर्णं पूर्णः केनचिन्नैव शोष्णे ।
इत्युत्कर्षादेव वर्षासु रिक्तं ग्रीष्मे पूर्णं यः स्वयं स्वं तनोति ॥ ७ ॥
अन्तर्नित्यं येन वृन्दारकाणां वृन्दैर्वन्द्यं बिभ्रता विश्वनाथम् ।
वीचीचञ्चत्फेनदम्भेन भेजे श्रेयः साक्षाद्दन्तिदन्तावदातम् ॥ ८ ॥
विश्वाधारं येन जामातृमात्रा पात्रं धृत्वा विश्वरूपं हृदन्तः ।
शम्भोर्भिक्षाभस्मयोग्यस्य मन्ये लक्ष्मीलिप्सोस्तस्य दत्तोऽर्द्धचन्द्रः ॥ ९
धामाधारः केलिसौधं कलानां सत्पुत्रोऽसौ दृक्सुधाबिन्दुरिन्दुः ।
एकं लक्ष्म क्षाल्यमस्मिन्निदं यः स्मृत्वेव स्यान्नक्तमभ्रंलिहोर्मिः ॥ १०
चञ्चच्चूलारत्नमालस्तमालप्रायच्छायः प्रोच्छलद्भोगिपूगः ।
और्वज्वालाजालभूर्भाति धूमावर्त्तस्तोमो विस्फुलिङ्गाव यस्मिन् ॥ ११
ईदृक्षश्रीराक्ष्यते योऽन्तरिक्षे तेनापीतं धिग्जना जानते माम् ।
अङ्गप्रौढिं कुम्भयोनेरितीव ख्यातुं लोके यः क्षिपत्यम्बुबिन्दून् ॥ १२
धूमस्तोमैर्वाडवाग्नेरिवान्तःसुप्तस्येव श्रीपतेस्तेजसा यः ।
रेजे रामक्षुण्णरक्षोमृगाक्षीदृग्मुक्ताम्भःकज्जलेनेव नीलः ॥ १३ ॥
नक्तं दीप्तैरोषधीनां वितानैः स्फूर्जज्ज्वालैः सूर्यकान्तैर्दिवापि ।
मूर्त्तं तेजो राघवस्येव शश्वद्दृश्यं यस्मिन्सेतुशैलच्छलेन ॥ १४ ॥

तस्याम्भोधेः स्मेरदम्भोजशोभां यच्छन्दृष्ट्या स्पष्टमप्राप्तपूर्वाम् ।
प्रापत्तूर्णं सैन्यलोकेन साकं लीलाशैलं रैवतं रेवतीशः ॥ १५ ॥

( नवभिः कुलकम् )

पौढप्रीती संहतौ कृष्णपार्थौ तौ सानन्दः प्राप सौनन्दपाणिः ।
उच्चैःपीठं सम्मुखाभ्युत्थिताभ्यां तूर्णं ताभ्यां हैममध्यासितोऽसौ ॥ १६ ॥
अन्तःशोभाभासमाने तृणालीशालिन्युच्चैर्वृक्षवल्लीविताने ।
तत्रावासानाशु विश्वैकनेतुः सेना तेने रैवतोर्वीधरान्ते ॥ १७ ॥
स्वच्छायाभिः सौरभैः पुष्पपङ्क्तेर्भृङ्गीगीतैर्माधुरीभिः फलानाम् ।
अङ्गेनापि श्रीनिधानेन वृक्षैरक्षप्रीतिः स्वाश्रितानां वितेने ॥ १८ ॥
स्वावासेषु स्थापितेष्वेव रीत्या जग्मे लोकैरप्यनापृच्छ्य किञ्चित् ।
कृष्णावासोऽदर्शयत्केतुना तत्तेषां शङ्के सर्वदिग्लोलिना तान् ॥ १९ ॥
अग्रे गत्वा स्थापयित्वाऽट्टपङ्क्तिं तूर्णं तस्थुस्तत्र वाणिज्यभाजः ।
उच्चैःपीठाध्यासिनो लम्बकूर्चाटोपत्रस्यत्तुन्दिलत्वापवादाः ॥ २० ॥
कश्चिद्वाचा लोचनान्तेन कश्चित् कश्चित्कायोल्लासभावभ्रमेण ।
तिष्ठन्सद्यः स्थापिते सन्निवेशे वेश्यालोकस्तोषयामास पुंसः ॥ २१ ॥
प्रत्यग्रप्राग्भूमिमुक्तैकपादोदञ्चचीरस्तोकदृश्योरुदेशाः ।
तूर्णं यानादुत्तरन्त्यस्तरुण्यो वीक्ष्यन्ते स्म स्मेरदृग्भिः स्मरार्त्तैः ॥ २२ ॥
प्रद्वेष्योपि स्पष्टमन्धंभविष्णुर्लग्नो दूरादेत्य सर्वाङ्गमङ्गे ।
दुःखं धूतो रेणुरेणेक्षणाभिः स्रस्तस्तूर्णं भूतले मूर्च्छयेव ॥ २३ ॥
खेदस्वेदोद्दामधामानि सद्यः पूर्णेन्दुश्रीजित्वराण्याननानि ।
तानि स्थाने वीजयंश्चामरालीर्लीलालोलैरञ्चलैश्चञ्चलाक्ष्यः ॥ २४ ॥
वंशाग्रेण क्षोणिमुक्तेन सौख्यादध्यारुह्य स्यन्दनानाशु बालाः ।
नामग्राहं हर्षहास्यानुगर्भैः शब्दैः शेषानाह्वयन्ति स्म डिम्भान् ॥ २५ ॥
एणः कुञ्जादुत्पतन् दूरयात्राखिन्नेनापि द्राक् समभ्युत्थितेन ।
भीलोलाक्षः केनचिन्नैव जघ्ने ध्यातः स्त्रीदृक्चारुतामोहितेन ॥ २६ ॥
ऊढाः प्रौढं सञ्चरद्भिर्विमानव्यग्रस्कन्धैर्यैस्तदा चेटवर्गैः ।
मृग्यन्ते स्म स्पर्द्धया तैरखिन्नैः खिन्नाः क्षोणीजानयोऽमी विधिं धिक् ॥ २७ ॥
तापादन्तःसङ्गतानां छिपानां कुम्भैरन्तोबिन्दुसन्दोहसान्द्रैः ।
व्यक्तं मुक्ताहारहारिस्तनश्रीबद्धस्पर्द्धै रेजिरे सिन्धुवध्वः ॥ २८ ॥
भ्रान्तैरन्तर्दन्तिभिः शैललीलैर्वारां पूरे पल्वलेषु प्रवृद्धे ।

सद्यो मूलोच्छेदमाशङ्क्य शङ्के लब्धातङ्काः पङ्कजिन्यो ममज्जुः ॥ २९

दूरोदञ्चद्वीचिनिर्मज्जदब्जं निर्मग्नानामन्तरातापशान्त्यै ।
दन्तीन्द्राणां पुष्करैः स्पष्टदृष्टैः कल्लोलिन्यो रेजुरम्भोजभाजः ॥ ३० ॥

हास्यं मा स्यादद्य कुम्भद्वयं वः प्रत्यक्षेषु स्पष्टभासां कुचेषु ।
ध्यात्वेतीव स्त्रीषु नीरागतासु व्रीडादन्तर्वारिमग्नं गजेन्द्रैः ॥ ३१ ॥

पद्मे बोधादास्यलास्यं दधाने हस्ताग्रेणाम्भोजिनीराकलय्य ।
मूर्धन्यध्यारोपयामास भूपः स्त्रैणभ्रान्त्या शिक्षितो राजदन्ती ॥ ३२

धौते दाने वारिभिर्वारणानां सम्मर्देनाम्भोजषण्डेऽपि भग्ने ।
प्रीतिं नीरायाननारीमुखाब्जैर्भेजुर्भृङ्गाः कुत्र चिन्ता न धातुः ॥ ३३ ॥

कुम्भस्याम्भःपूर्यमाणस्य शब्दं श्रुत्वा दूरादन्यदन्तिभ्रमेण ।
एत्य व्यालो योषितोऽग्रे ततायाः सद्यः पश्यन्नत्रसत् सिंहशङ्की ॥ ३४

सिन्धौ क्षुभ्यन्नन्यगन्धेभगन्धाद्धत्वा यानं स्वप्रतिच्छन्द एव ।
भग्ने तस्मिंस्तोयकम्पेन तेने मत्तो दन्ती गर्जितान्यूर्जितानि ॥ ३५ ॥

हस्तोदस्तैश्चातकान्प्रीणयन्तो नीरैर्धीरध्वाननृत्यन्मयूराः ।
अम्भोधिभ्यस्तोयलीलानिलीना निर्जग्मुस्ते वारिवाहा इवेभाः ॥ ३६

दन्ती दानैर्गण्डकण्डूयनोत्थैः साक्षाद्वृक्षं सौरभाढ्यं चकार ।
दूरोत्क्षिप्तैः सद्य एव प्रसूनस्तोमैः सोऽपि प्रत्युपाकारि तेन ॥ ३७ ॥

भग्नः शाखी क्रीडया कुञ्जरेण भ्रष्टो नोर्व्यां तद्दृढालानबन्धात् ।
लोकाः किन्तु व्यापदं क्रूरशूरम्लानैर्जज्ञुस्तस्य पत्रप्रसूनैः ॥ ३८ ॥

उद्यद्दानामोदलुब्धालिमालागीतप्रीताः सैन्यभाजो गजेन्द्राः ।
आलानद्रुच्छद्मसायूरपत्रच्छत्रच्छायाच्छन्नतापा विरेजुः ॥ ३९ ॥

लीलामीलद्दृष्टिभुक्तापभुक्तैरेवाहारैरुन्मदाः सादिनोऽपि ।
चाटूक्त्या वा ताडनक्रीडया वा नाशु ग्रासं ग्राहयामासिरेऽमी ॥ ४०

धातृद्भिन्नाः पीवराश्चीवराणामत्रावासाः सर्वतः पर्वताभाः ।
पर्यन्तेषु प्रेङ्खितैः शाखिदत्तच्छायं रेजुः पादकल्पैः करीन्द्रैः ॥ ४१ ॥

स्फूर्तिर्यादृक् साश्ववारेऽश्ववारे तादृग् नासीदस्तनिःशेषभारे ।
तेजोभाजामप्रभाव्यं स्वभावे तेजः स्पष्टं यत्पराक्रान्तिषु स्यात् ॥ ४२

मन्दं मन्दं सञ्चरन्दूरयानव्यासङ्गेनालक्षि यः खिन्न एव ।
सेनाभाजां विस्मयं स प्रतेने मुक्तो धावन्नेव रेवन्तितोऽश्वः ॥ ४३ ॥

उत्तिष्ठद्भिर्वेल्लनान्ते नवाश्वैः सार्धं वेगादङ्गलग्नैव बाढम् ।

सर्वाङ्गीणस्पर्शसौख्यानिरेके रेणुश्रेणिच्छद्मना भूरुदस्थात् ॥ ४४ ॥
सर्वाङ्गीणक्ष्मापरीरम्भशोभाहृद्यः सद्यः सापराधोऽपि गच्छन् ।
भेजे वाजी सम्मुखीनाभ्युदश्चद्वीचीहस्तैस्ताड्यमानोऽपि सिन्धुम् ॥ ४५ ॥
चापल्यश्रीभास्वराणां मुखाग्रस्फूर्जत्फेनभ्राजिनां ध्वानभाजाम् ।
जज्ञे लोलल्लोचनैः स्थानपालैः कल्लोलानां वाजिनां वा न भेदः ॥ ४६ ॥
क्रीडङ्क्रीडं कौतुकाद्दीर्घकालं मन्दं मन्दं निःसरन्वाजिराजः ।
किञ्चिल्लीलालोलकल्लोलमूर्त्या कल्लोलिन्या न स्वभावन्वगामि ॥ ४७ ॥
ते प्रत्येकं ख्यातिमन्तो महान्तः पृथ्वीनाथैः सस्पृहं प्रेक्ष्यमाणाः ।
रेजुः पङ्क्तिस्थापिता भोगपात्रैरास्ये बद्धैर्लब्धकूर्चा इवाश्वाः ॥ ४८ ॥
उष्ट्रा रावं चक्रुरुत्सार्यमाणे भारेऽप्युच्चैर्यत्नतो दुःखितास्ते ।
हेलाविश्वोल्लङ्घनारम्भिणोऽल्पक्षोणीगत्या नूनमद्याप्यतृप्ताः ॥ ४९ ॥
मुक्तद्राक्षास्तम्बजम्बूरसालो बब्बूलादिग्रामलोलाधरोष्ठः ।
उष्ट्रव्यूहोऽहासि रूपानुरूपे सत्याहारे पक्षिरावैर्वनीभिः ॥ ५० ॥
मुक्ते भारे सद्य एव प्रमत्ता ध्वानश्रमस्पर्धिनः सौरभेयाः ।
शृङ्गैः स्वाङ्गच्छायया युध्यमानाः सिन्धौ रोधः पातयामासुराशु ॥ ५१ ॥
दृग्मार्गमेत्य रचिताननयः पदान्तमागत्य निर्मितपुनःप्रणतिप्रपञ्चाः ।
सम्भाविताः समनमन्मुकुटेन पाण्डुपुत्रेण सम्मदमधुर्वसुधाधिनाथाः॥५२॥
सैन्यं कृतावासमशेषतोपि कुतूहलेनेव निरीक्षितुं तत् ।
नभोऽग्रचूलामधिरुह्य देवः स्थिरीबभूव क्षणमुष्णरश्मिः ॥ ५३ ॥
स्वैरं विलस्य सकलासु वनस्थलीषु छायापि तीव्रतपनातपतापितेव ।
भूमीरुहां प्रसववृन्दमरन्दधारासम्पातशीतलतराणि तलानि भेजे ॥ ५४॥

तन्वाने तरणौ करव्यतिकरोत्पाटं ललाटन्तपे
विष्वक् सङ्कुचितैर्विनिश्चलतया ग्रावणेव निर्मापितैः ।
क्षिप्त्वा नम्रतराग्रमग्रचरणद्वारेण मौलिं निज-
च्छायासीम्नि मरुप्रदेशमहिषैः केदारदेवायितम् ५५
सम्पातेन सदैव निर्झरजलव्रातैर्विलीनं मही-
पीठेनापि निमम्मरत्वमधित व्योमापगापङ्कजम् ।
पातालं तपनोपलाचलतलप्रोद्भूतधूमध्वज-
ज्वालौघैरसमञ्जसं समजनि प्रोद्दप्रतापे रवौ ॥ ५६ ॥

इत्यात्ममौलिमणिजर्जरितान्धकारा गुप्तप्रकीर्णकरशीकरभाञ्जि भेजुः ।
भूपाः स्वभावशिशिराणि रथादसूर्यम्पश्यानि रैवतककन्दरमन्दिराणि ॥

इति श्रीगूर्जरेश्वरमहामात्यश्रीवसन्तपालविरचिते नरनारायणानन्दनाम्नि
महाकाव्ये निवासनिवेशवर्णनो नामाष्टमः सर्गः ॥ ८ ॥

श्रीवस्तुपालसचिवस्य परे कवीन्द्राः कामं यशांसि कवयन्तु वयं तु नैव ।
येनेन्द्रमण्डपकृतोऽस्य यशःप्रशस्तिरस्त्येव शक्रहृदि शैलशिलाविशाले ॥ ८ ॥

## नवमः सर्गः

प्राप्तपौरपरिवारपरीतः पार्थसौहृदमदेन मुकुन्दः ।
अन्यदा मधुमहोत्सवकेलीकौतुकेन विललास वनान्तः ॥ १ ॥
रोमराजिगुणराजिनि मुष्टिग्राह्यमध्यभुवि चम्पकचारौ ।
मन्मथोऽजनि मिथो युवलोके स्त्रीजने करगते धनुर्षीव ॥ २ ॥
कामिनीरनुयतां तरुणानां बाहुमूलनिहितोरुभुजानाम् ।
तत्कुचाग्रशिखराणि न पाणिद्वन्द्वमाप परिरम्भपराणाम् ॥ ३ ॥
न्यक्कृतानुलयचाटुरपि प्राक् प्रेयसा स्वयमियाय समं स्त्री ।
कामचापकुटिलास्खलिगुञ्जाटङ्कृतासु तरुमञ्जरिकासु ॥ ४ ॥
दूरवर्तिनि वरे द्रुतभेका दुर्वहस्तननितम्बभरापि ।
सञ्चचाल पुरुषायितलीलालब्धलाघवलया नटभ्रूः ॥ ५ ॥
आलिलुप्तपदकापि लतान्तर्नर्मगोपिततनूरनुगेन ।
प्रापि काप्यधरपानपरालिश्रामलोलकरकङ्कणनादैः ॥ ६ ॥
आसदन्मृगदृशः प्रतिहारः स्पर्धिना मनसिजेन सनाथम् ।
आशु कौतुकविलासनरेशद्वारदेशपदवीमिव दोलाम् ॥ ७ ॥
तत्क्षुभाप्युपचकार पुरारिर्यच्चकार रतिनाथमनङ्गम् ।
स्त्रीनितम्बनिचितेष्वपि दोलामण्डपेषु स समौ यदबाधम् ॥ ८ ॥
प्रासितं हरिनखैरिव वक्रैः किंशुकैर्मृगमुदेक्षत चन्द्रः ।
भूतले दिवि च विस्तृतदोलालोलमानललनास्यमिषेण ॥ ९ ॥
स्फारनूपुररवैश्चलदोलाकेलिलोलरभर्णाचरणाग्रैः ।
श्रीरमोदत विराविमरालोत्सङ्गजङ्गमनभोनलिनाभैः ॥ १० ॥
स्त्रैणमेव निजशास्त्रममोघं मन्यते स्म मकरध्वजवीरः ।

अक्षिपद्भिर्जितमर्त्यमिदं यद्दोलया दिवि सुरानपि जेतुम् ॥ ११ ॥
दोलया तरलया वपुरासां यत्समीकृतकृशाकृशमैक्षि ।
तत्कुचाग्रभरभङ्गभियेव ब्रह्मणा तदपि मध्यमपूरि ॥ १२ ॥
दोलयाद्भुतगतागतिभाजामुन्नतस्तननितम्बविलग्नम् ।
योषितां युवभिरूर्ध्वतनूनां भग्नभग्नमवलग्नमशङ्कि ॥ १३ ॥
चापयष्टिमिव दीधितिमेषां यत्तनोति तरला मणिदोला ।
विश्वविश्वजयिनो रतिभर्त्तुर्बाणता तदबलाभिरलाभि ॥ १४ ॥
योषितः सह धवैरतिभूमिं गन्तुमुज्ज्वलविलासरसानाम् ।
आसदन्नतिगतिं दिवि दोलां कामदत्तमिव मङ्क्षु विमानम् ॥ १५ ॥
कामुकैः कुचनितम्बनतानां प्रेङ्खया तरलितोर्ध्वतनूनाम् ।
भङ्गनिर्भरभयादृढमुष्ट्या योषितां झटिति मध्यमधारि ॥ १६ ॥
उन्नतोभयशिखाऽघटि रत्नप्रेङ्खया तरलया रुचिरेखा ।
प्रेमपाथसि विलासपयोधौ नौरिव प्रियजुषः प्रमदायाः ॥ १७ ॥
तादृशैरपि गतागतखेलैर्यन्न बिभ्युरबला विलसन्त्यः ।
दोलया तरलितैस्तरुभिस्तत्पुष्पवृष्टिमसृजत् कुसुमेषुः ॥ १८ ॥
प्रेङ्खितक्षितिरुहच्युतपुष्पस्फारसौरभविशेषितलोभाः ।
योषितः प्रियतमैः सह चेरुस्तन्वते स्म कुसुमावचयाय ॥ १९ ॥
मा व्रज ध्वनिमितीव वितेने सन्नतावनरणत्स्पृशि दोला ।
स्त्रीजने तु रभसादवतीर्णे मूर्च्छयेव विरहेण जुघूर्णे ॥ २० ॥
क्लृप्तपुष्कलवपुः सह रत्या विश्वदर्पदनिमित्तिषेण मनोभूः ।
सर्वतोऽप्यवचिचाय शरार्थं सञ्चितानि मधुना कुसुमानि ॥ २१ ॥
सम्मुखीनमिलदक्षिविभावोद्भिन्नमानभरसेन मिथोपि ।
अन्यतः पतिरमुञ्चत पुष्पाण्यन्यतः करमसञ्जयत स्त्री ॥ २२ ॥
पल्लवेषु सदृशः प्रमदायाः पाणिरप्यवचयाय गृहीतः ।
तादृशभ्रदिमतो बत मत्त्वा मङ्क्षु दक्षदयितेन चुचुम्बे ॥ २३ ॥
लूनपुष्पवलभृङ्गभियेव द्राक् पतिं चतुरया परिरभ्य ।
नैव लाघवमलाभि कयाचित् कल्पिताऽन्ययुवतेरपि नेर्ष्या ॥ २४ ॥
श्यामविस्तृतभुजोपि नितम्बे न क्षमः श्रियमुदञ्चयितुं यत् ।
उच्चपुष्परुचिमेव युवा तन्मध्यबद्धमृदुमुष्टिरुदासे ॥ २५ ॥

कापि गोत्रभिदि भर्त्तरि पुष्पं दातुमिच्छति वधूर्नतमुष्टिः ।
संहतस्तनकठोरतयेव स्वं शुशोच भृशमस्फुटितं हृत् ॥ २६ ॥
अक्षिण पुष्परज एव विनेतुं पत्युरंसकृतपाणिरुदित्य ।
विस्मृतास्यपवनप्रतिकारा स्त्री रसादकृत चुम्बनमेव ॥ २७ ॥
माद्यति स्म कुसुमासवपाना कापि विक्लवविघूर्णितदृष्टिः ।
तद्विशङ्कितरवल्लभगाढाश्लेषपात्रमपरापि ममाद ॥ २८ ॥
या ददे मृगदृशः कुसुमस्रक् नाम नामभिदया दयितेन ।
एतया लघुतयैव स बद्धः स्वोऽप्यचेतनहृदां हि परः स्यात् ॥ २९ ॥
कोपि गोत्रभिदया नवमालां योषितो दददतोषयदन्याम् ।
किञ्च तत्पदहतः पुलकाङ्कं विग्रहं दधदपीडयदेनाम् ॥ ३० ॥
गुप्तगर्भकमपि स्फुटपुष्पं जानती निजशुचिस्मितभिन्नम् ।
बध्नती दयितकेशकलापं मार्जनेषु विरराम न रामा ॥ ३१ ॥
मुग्धया प्रियतमश्चिहुराली गुम्फितुं नवमुखेन विवृण्वन् ।
स्रस्तपाणिरपरामुखचुम्बी पुष्पमश्रयपरोऽयममानि ॥ ३२ ॥
माद्यतु प्रियकरे धृतकम्पे काप्यबद्धचिहुरा नवपुष्पैः ।
धिक्परा प्रियतमस्वकरस्रग्बाहुबद्धचिहुरापि ममाद ॥ ३३ ॥
यौवनोष्मभरतत्क्षणदत्तम्लानिरप्युरसि चम्पकमाला ।
अङ्गगौररुचिगौरवलिप्ता स्त्रीजनस्य सरसैव विरेजे ॥ ३४ ॥
मारुतेन कुसुमावचयोत्थः स्फारितो दिवि रराज परागः ।
योषितामसममानि च मूर्त्तो मूर्त्तिमान् रुचिभरः कनकाभः ॥ ३५ ॥
कान्तहस्तधुतचारुसमीरैर्योषितामभिहतः श्रमघर्मः ।
तैरवध्यत पुनर्मदनाग्नि दीपयद्भिरभितः परितापः ॥ ३६ ॥
कान्तपाणिपटशीतसमीरैर्नो तथा मृगदृशो मुदमापुः ।
दीप्तकोपदहनोष्णमपत्नीश्वाससमारुतरयेण यथैताः ॥ ३७ ॥
अङ्के मृगदृशां रविताषागोपितश्चिरमराजत रागः ।
तादृशश्रमजलापनयेच्छालोलपाणितलसङ्क्रमितो नु ॥ ३८ ॥
यत्सहस्रकरजं क्लमवारि च्छिद्यते क तदपि द्विकरेण ।
तज्जयाय निरपायमुपायं रागिणस्तदिति मज्जनमीयुः ॥ ३९ ॥
हृत्त्वा हृत्त्वा व्रततिविततेः पुष्पभूतिं प्रभूतां
यान्तीः कान्ताः सममनुचरैर्नीरकूर्गाय नूनम् ।

अन्वीयुस्ते चिरपरिचयात्पक्षपातैकदक्षा
लोलाः कोलाहलभरभृतश्चञ्चरीकप्रवीराः ॥ ४० ॥

इति श्रीगूर्जरेश्वरमहामात्यश्रीवसन्तपालविरचिते नरनारायणानन्दनाम्नि
महाकाव्ये पुष्पावचयप्रपञ्चो नाम नवमः सर्गः ॥

करसरसिरुहं ते वासवेश्म श्रियोऽभू-
दजनि वदनपद्मं सद्म वाग्देवतायाः ।
इह जगति समस्ते वस्तुपाल स्तुमः कं
सचिवतिलक धन्यं तद्वदान्यं वदान्यम् ९

# दशमः सर्गः ।

मौलौ सपुष्पे व्यजनायमानैः पक्षभ्रमैश्छत्रनतांकृताङ्गैः ।
भृङ्गैर्मलत्तापनतापघर्माश्चेलुः सहेलं पयसे महेलाः ॥ १ ॥
मूलस्फुटाभिर्विततातपत्रच्छायाभिरादिच्छदमेचकाभिः ।
स्मेराब्जमुख्यः स्थलपङ्कजिन्यो रेजुर्गता जङ्गमतामिवैताः ॥ २ ॥
काचिद्वरे छत्रितचीवरेऽपि सद्योऽभिधाभेदिनि तापमाप ।
तस्याः सपत्नी चलितापि तापे छायाममायां पुनराससाद ॥ ३ ॥
कल्लोलिनीभिः प्रतिपत्तिहेतोर्हंसा नियुक्ता इव संमुखीनाः ।
मञ्जीरमञ्जुक्वणितेन हृताश्चेलुश्चलाक्षीरभि चारुवाचः ॥ ४ ॥
अम्भोजसौरभ्यधरोऽम्बुबिन्दुसन्दोहवाही मृदुलः समीरः ।
अभ्याययौ सम्मुखमङ्गनानां नूनं नदीसम्प्रहितोपचारः ॥ ५ ॥
अभ्युक्षणान्युच्छलितोदबिन्दुवृन्देन दत्त्वेव नितम्बिनीनाम् ।
भूमौ स्रवन्ती लुठिता सखीव पस्पर्श पादौ लुलितोर्मिहस्तैः ॥ ६ ॥
तीरस्थिते पादयुगानि जानुदघ्ने करान्कण्ठमिते मुखानि ।
राजीवयन्त्यः सलिले क्रमेण चक्रुः प्रवेशं सुदृशो नदीषु ॥ ७ ॥
पूर्वं प्रविष्टावपि नाभिदघ्ने कूष्णौ ह्रदे व्याकुलितौ पयोभिः ।
अभ्यागतस्त्रैणनितम्बशैलाभोगेन तासामपि लङ्घयद्भिः ॥ ८ ॥
नार्यः स्तनस्तम्बनितम्बबिम्बाभोगेन चक्रुर्द्विगुणं यदम्भः ।
तेनैव तेने द्विगुणत्वमासां तेनापि सद्यः प्रतिबिम्बयोगात् ॥ ९ ॥
लोले जलार्द्रस्तनचुम्बिबिम्बे स्वे चक्षुषी वीक्ष्य तिमिभ्रमेण ।
वोढुर्नवोढा रभसेन कण्ठाश्लेषोत्सवाय प्रथमाय जाता ॥ १० ॥

चित्तेशपाणिच्युतनीरधारा दूरे तरुण्याः स्खलिता करेण ।
दीर्घा रराज स्मरकार्मुकाय संसज्यमानेव मृणालमौर्वी ॥ ११ ॥
अक्ष्णि प्रियाया रभसेन कश्चिदम्भः सदम्भः प्रचुरं विकीर्य ।
लोलोऽन्यकान्तामुखविभ्रमेण स्मेरं समीपे कमलं चुचुम्ब ॥ १२ ॥
हस्ता विरेजुः सुदृशां निमग्नाः स्वच्छेऽमदभ्रेऽम्भसि दृश्यरूपाः ।
तासां जितानीव मुखप्रभाभिः पद्मानि सव्रीडमधोमुखानि ॥ १३ ॥
साकं सखीभिः कुतुकात्तरन्ती प्रेक्ष्य प्रियं शून्यकुलत्करापि ।
अम्भःसु नो काचिदचेतनत्वसंस्तम्भितश्वासतया ममज्ज ॥ १४ ॥
गोत्रान्तरालापकृतागसोऽपि पङ्करुहं दत्तवतः प्रियस्य ।
काचित्तदुड्डीनषडङ्घ्रिभीत्या कण्ठेऽपि लग्ना न लघुत्वमाप ॥ १५ ॥
खेलन् जलैः सञ्जितया कथंचिद्धारिभिः सर्वतानां सह मुग्धयान्यः ।
तत्प्रीतिनिर्हेतोरपि हारयित्वा मेने मुहुः स्वं कृतकृत्यमेव ॥ १६ ॥
कान्ते छलान्निर्मितनीरसेके मुग्धा सखीं सत्कुपिता जघान ।
तं भावमात्मन्यभिशङ्कमाने तस्मिन्मुदाऽभूत्पुलकप्ररोहः ॥ १७ ॥
रोधस्तटेभ्यः कुतुकादभीक्ष्णं दत्त्वापि झम्पामनु चित्तनाथान् ।
उच्चैर्नितम्बस्तनशैलभाराद्दाराः प्रपेतुः प्रथमं पयःसु ॥ १८ ॥
क्षिप्तैः स्वयं वारिकणैर्वधूनां वक्षोजपीठाद्गलितैः स्खलित्वा ।
नूनं युवानो हृदये तदम्भः पुष्पैपृषत्कैरिव घातमापुः ॥ १९ ॥
सेकं सृजन्ती दयितानने द्राक् नेत्राञ्जलिप्रेमजलैरभीक्ष्णम् ।
शून्या स्थलासीज्जलशून्ययैव काचिद्वयस्यासु करप्रसृत्या ॥ २० ॥
शङ्के तदा कैरवलोचनानां केलिच्युतैराभरणैः सरत्नैः ।
तद्वाहिनीवारिभरप्रणुन्नै रत्नाकरोऽभून्मकराकरोऽपि ॥ २१ ॥
अम्भोहृतैस्ताः सरितोऽङ्गनानां नेत्राञ्जनैश्चन्दनलेपनैश्च ।
कल्माषिता भास्करजह्नुकन्यासम्भेदशोभां बिभराम्बभूवुः ॥ २२ ॥
सङ्क्रान्तरागास्तटिनीतरङ्गाः कान्ताकुचस्पर्शविशेषलोलाः ।
विस्रस्तहारच्युतमौक्तिकौघैः सस्वेदबिन्दुप्रसरा इवासन् ॥ २३ ॥
अङ्गच्युताश्चारुदृशां विलोलकल्लोलनुन्नाः सरितां तटेषु ।
म्लानिं प्रपन्ना विरतालिशब्दाः पुष्पस्रजो मौनमिव प्रतेनुः ॥ २४ ॥
अङ्गत्विषा चम्पकदामनीरधौतैर्नखाङ्कैर्नवकिंशुकस्रक् ।
स्त्रीणां स्मितेन स्मितमल्लिमाल्यं भ्रष्टेषु पुष्पेष्वपि मण्डनानि ॥ २५

मध्येऽम्बुदुर्गं विकचारविन्दश्रीलुण्टनेनेव नितान्तरक्तम् ।
चक्षुर्द्वयं चारुदृशो दधाना मङ्क्त्तरन्ति स्म तरङ्गिणीभ्यः ॥ २६ ॥
नूनं विनिर्यद्वनितानितम्बवक्षोजविक्षोभवियोगदुःखात् ।
कल्लोलिनीनां रसमञ्जुलेन कल्लोलजालेन कृशत्वमापि ॥ २७ ॥
यत्केशपाशे पतितानि नूनं चित्तानि यूनां मृगचञ्चलानि ।
अन्यत्र गन्तुं चिरमक्षमाणि यान्ति स्मरव्याधशरव्यभावम् ॥ २८ ॥
सीमन्तदण्डानुगतेन यस्या लाभार्द्धचन्द्रेण जगद्विजित्य ।
पुष्पायुधश्चम्पकसन्निभेन क्षोभं न शम्भोरपि किं तनोति ॥ २९ ॥
मन्ये स्मरव्याधधनुःसमानां यस्या भ्रुवं वीक्ष्य पलायमानः ।
पन्थानमास्येन्दुमृगस्ततान सीमन्तसृत्या चिहुरान्तराले ॥ ३० ॥
शङ्केऽवतंसाम्बुजषट्पदानां गीतेन पक्षानिलर्लीलया च ।
कर्णोन्मुखं धावति नेत्रयुग्मं यस्या मनोभूमृगयामृगाभम् ॥ ३१ ॥
भ्रूपक्षरेखाकचिरस्य कामकीरस्य यस्यास्तनुवल्लिभाजः ।
नासा विभाति स्फुटपाटलोष्ठबिम्बीफलामन्तिततेव चञ्चुः ॥ ३२ ॥
यस्याः कपोलौ मदनावनीशकान्ताद्वयीखेलनकुट्टिमाभौ ।
नासाविभक्तौ श्रुतिपाशलोलदोलाश्रितौ कस्य न सम्मदाय ॥ ३३ ॥
कीर्तिप्रवाहो नवयौवनस्य शृङ्गारयोनेर्जयवैजयन्ती ।
पुण्यात्मनः कस्यचिदङ्घ्रियुग्मं यस्याः स्मितं राजति हारहारि ॥ ३४ ॥
यस्या मुखे दन्तनिर्जितान्तमोष्ठप्रभापाटलिता चकास्ति ।
आर्द्रा पदश्रेणिरलक्तकाङ्का वाग्देवतायाः इव सञ्चरन्त्याः ॥ ३५ ॥
यस्या विराजत्यधरोऽरुणश्रीज्योत्स्नामगर्भस्मितकान्तिगर्भः ।
कामस्य रुद्रानलविह्वलस्य पुष्पप्रवालप्रथितेव शय्या ॥ ३६ ॥
यस्या हृदन्तर्गतपुष्पबाणत्राणप्रसूनैरिव जातमङ्गः ।
श्वासानिलश्चञ्चलचञ्चरीकचेतोहरं सौरभमाततान ॥ ३७ ॥
नासीरवीरः स्मरपार्थिवस्य वाञ्छाधुरीधुर्यगुरुः पिकानाम् ।
मन्ये स्वयं वादयते वसन्तो यत्कण्ठकम्बुं मधुरारवेण ॥ ३८ ॥
कर्णावतंसाम्बुजगन्धगुञ्जद्भृङ्गीव येनेव ततौ दधाति ।
अंसौ रतिप्रीतिसहाधिरोहपर्यासमौ या स्मरचित्रशाला ॥ ३९ ॥
यस्याः कपोलेन्दुयुगस्य रश्मिदण्डाविव द्वेषगृहीतपद्मौ ।
बाहू जपाकुड्मलपाटलत्वलुण्टाकपाणी विशदौ विभातः ॥ ४० ॥

मुक्त्वा मृणालीमृदुमप्यमान्तं रोमालिमूर्त्या निजचापदण्डम् ।
यस्याः स्तनौन्नत्यनिरन्तरालद्वारेप्यनङ्गो हृदये विवेश ॥ ४१ ॥
मध्ये न मन्ये विजितो नताङ्ग्याः पञ्चाननः काननबद्धवासः ।
यस्याः स्तनस्तम्बतटीधियेव कुम्भीन्द्रकुम्भौ कुपितो भिनत्ति ॥ ४२
जित्वा प्रसूनैरपि विष्टपानि जेतुं त्रिशूलायुधमप्यजेयम् ।
मन्ये यदन्तस्त्रिवलिच्छलेन शल्यत्रयं सज्जयते मनोभूः ॥ ४३ ॥
यस्याः कलापानणुकिङ्किणीनां क्वाणै रतिर्नृत्यति मध्यसीम्नि ।
तत्तत्पदैकभ्रमिपार्ष्णिचिह्नशोभां सुवृत्ता वितनोति नाभिः ॥ ४४ ॥
यस्या विभाति स्मरभूमिपाललीलागृहश्रोणिकृतप्रतिष्ठात् ।
रोमावली काञ्चिमणिप्रदीपादभ्युत्थिता कज्जलमञ्जरीव ॥ ४५ ॥
यस्या नितम्बो गुरुरेव भाति पञ्चेषुपुष्पेषुपतिपूजनीयः ।
यत्सेवनादेव दिने दिनेऽपि काञ्चीकलापस्य गुणप्रवृद्धिः ॥ ४६ ॥
आभाति यस्या जघनप्रदेशः कामस्य लीलाम्बुरलीगृहाभः ।
ऊरुस्थलद्वारि निवेशितरम्भास्तम्भद्वयीतोरणदत्तशोभः ॥ ४७ ॥
यस्या नितम्बस्थलभूरिभारक्रान्तस्य जङ्घायुगलस्य गौरम् ।
कल्याणमञ्जीरमरीचिच्छलेन निस्यन्दि लावण्यमिवात्र भाति ॥ ४८ ॥
वक्षोजशैलान्तरिते मुखेन्दौ सन्ध्यारुणं पादयुगं यदीयम् ।
विष्वग् नखैस्तारकितं सरोजम्लानिक्षमं वीक्ष्य न कः सकामः ॥ ४९
लीलागतिं शिक्षितुमभ्युपेतैर्दिक्ष्वयस्थूल्यैरिव धातृहंसैः ।
या स्तूयते सञ्चरणेषु मञ्जुमिञ्जानमञ्जीररवच्छलेन ॥ ५० ॥
निःसीमसीमन्तमणिर्विधूनां कन्या जलौघादथ निःसरन्ती ।
आकृष्यमाणेव पुरः स्तनाभ्यां मन्दं सुदुर्वाह्यनितम्बभारा ॥ ५१ ॥
लावण्यपूरातिपरीतदेहनिस्यन्दवत्तोयकणान्किरन्ती ।
पार्थेन मग्नो मदनातुरेण विष्णुस्वसादौ ददृशे सुभद्रा ॥ ५२ ॥ (कुलक
नागाद्रिर्चारान्तरदृश्यमानसर्वाङ्गलावण्यविशेषरम्याम् ।
पश्यन्निमां मन्मथमथ्यमानचेताश्चिरं चिन्तयति स्म पार्थः ॥ ५३ ॥
वृद्धः स धाता खलु यः किलास्मिन् दृष्टेऽपि पूर्वं घटिते मुखेन्दौ ।
साक्षादनुद्भिन्नमनोविकारो निर्मातुमेनां सकलां शशाङ्क ॥ ५४ ॥
प्रेमोत्तरं मार्जयिता सुकेश्याः केशानिमान् कः सुकृती कराग्रैः ।
अस्याः करादर्शविलम्बिबिम्बे सञ्चारयँल्लोचनमाननेन्दौ ॥ ५५ ॥

वीरः कुचक्ष्माधरदुर्गमेऽस्याः कन्दर्पदुर्गे हृदि कः प्रवेष्टा ।
चक्षुःपथेनाऽभिमुखं कटाक्षनाराचपातैरभिताड्यमानः ॥ ५६ ॥
पादप्रणामेऽपि न मे प्रसादमेषा विधातेति मुधैव तिष्ठन् ।
कामार्त्तया कः स्वयमेत्य धन्यः प्रौढापराधोऽप्यनयाऽनुनेयः ॥ ५७ ॥
अस्या वितन्वन् हृदि पत्रवल्लीं कंपादमप्राप्तविशेषरेखाम् ।
साक्षादपूर्णामपि कामलोलः कश्छेकधीर्लोपयिता हृदैव ॥ ५८ ॥

एतस्याः श्रवणावतंसकलिकासौरभ्यलोभभ्रमद्-
भृङ्गाभोगमहोदराः प्रतिपदं वन्दे कटाक्षच्छटाः ।
को धन्यः स्तनसङ्गभङ्गविगलन्मुक्तावलीबिन्दुकं
संरूढः परिरम्भदम्भनिभृतं प्रेमामृतं पास्यति ॥ ५९ ॥

इत्यन्तःप्रथमानसंशयतुलारूढः प्ररूढव्यथा-
टोपः सोऽपि सुभद्रया निजसखीसञ्ज्ञाचलन्नेत्रया ।
लावण्यैकनिकेतमिन्द्रतनुभूर्दृष्टश्च दर्पोद्धतं
कन्दर्पेण हता च सा हृदि तदा कर्णान्ततान्तैः शरैः ॥ ६० ॥

एकोऽपि स्वयमेककालमिषुभिर्भिन्दन्सुभद्रार्जुनौ
कामः कीर्तिमवाप कामपि तदा धुर्यो धनुर्धारिणाम् ।
अन्योऽन्यप्रथमानमानसरसौ दृष्ट्वा च तौ हृष्टिभाग्
विष्णुर्द्वारवतीं जगाम सुहृदा तेनैव दत्तोत्सवः ॥ ६१ ॥

इति श्रीगूर्जरेश्वरमहामात्यश्रीवसन्तपालविरचिते नरनारायणानन्दनाम्नि
महाकाव्ये सुभद्रादर्शनो नाम दशमः सर्गः ॥

या श्रीः स्वयं जिनपतेः पदपद्मसद्मा
भालस्थले सपदि सङ्गमिते समेता ।
श्रीवस्तुपाल तव भालनिभालनेन
सा सेवकेषु सुखमुन्मुखतामुपैति ॥ १० ॥

# एकादशः सर्गः

अथ मङ्क्षु हृदि प्रविष्टया मदनाग्नेयकबाणकल्पया ।
कनकोज्ज्वलया सुभद्रया निबिडं दाहमुवाह फाल्गुनः ॥ १ ॥
परिशोषितदीर्घिकाजले सहसा मर्मरिताब्जसंस्तरे ।

हृदि तापिनि तस्य दियुते कुसुमेषोः कुसुमेषुभिः परम् ॥ २ ॥
शरदिन्दुमुखि प्रसीद मे निगदन्नीदृशमाकुलो मुहुः ।
अधिरोपयति स्म नीरजं दयितापादधिया स मूर्द्धनि ॥ ३ ॥
स्मरमार्गणदारिते स्फुटीकृतमन्तःस्थमिव प्रियामुखम् ।
हृदि दत्तमवेक्ष्य पङ्कजं द्रुतमाप प्रमदं वृथाशया ॥ ४ ॥
शरजालशरव्यतामयं यदनङ्गो न ममापि गच्छति ।
कुलपूर्वज एव यद्विधुस्तदिमौ तापयतां करोमि किम् ॥ ५ ॥
मलयानिलपङ्कजाकृते यदि कुर्याममृगं शरैर्जगत् ।
तदपास्तकलङ्ककल्मषो मृगलक्ष्माऽप्यतिदुःसहो भवेत् ॥ ६ ॥
तदमुं पवनाशनास्त्रतः पवनं सम्प्रति शोषयाम्यहम् ।
इति दृष्टिमदत्त कार्मुके दयिताभ्रूस्मरणात् मुमूर्च्छ च ॥७॥ ( विशेषकम्
पवनः कदलीदलैरयं क्रियते चन्दनचर्चितैः कुतः ।
मलयाचलवायुकारि कापरमार्थो यदतीव तापकृत् ॥ ८ ॥
अभिसर्पति दक्षिणानिले विहितो हन्त किमन्तरा पटः ।
गलितो यदनेन विस्फुरन्नतिदुःखाय ममैष जायते ॥ ९ ॥
व्यथयत्ययमम्बुजव्रजो हृदयं मे रुषयेव पाटलः ।
यदमुष्य विरोधिने प्रियावदनाय स्पृहयत्ययं सदा ॥ १० ॥
किमु चन्दनचर्चनं वृथा विहितं वक्षसि तापशान्तये ।
अमुना दयितास्मितप्रभास्मृतिर्व्याजेन हहा हतोऽस्म्यहम् ॥ ११ ॥
इति तापनतिप्रतिक्रियाप्रगुणं मित्रजनं मुहुर्गिरा ।
अमृजन्निजदुःखभाजिनं निजदुःखस्य लवं न चामुचत् ॥ १२ ॥
( पञ्चभिः कुलकम्
किमु रोदिषि नन्वि नन्वितस्त्यज कोपं मुखरागकारणम् ।
इति भृङ्गविरावि वारिजं दयितावक्त्रधिया चुचुम्ब च ॥ १३ ॥
परितः परिदर्शितैः प्रियावदनैस्तच्चिरतमसे स्मरः ।
वियदिन्दुघटामयं व्यधान्नलिनस्तोममयं च भूतलम् ॥ १४ ॥
किमु रे विरहज्वरव्यथा स्मर त्वयापि न ते निवेदिता ।
मरणादनभिज्ञ वल्लभाविरहो हन्ति हहा वियोगिनम् ॥ १५ ॥
हर संहर सम्प्रति स्मरं स्मर भक्तिं द्विगुणीकृतां मम ।
अधुनापि यतः प्रियास्तनौ हृदि कुर्यो शिवमूर्त्तियुग्मवत् ॥ १६ ॥

स्मितमञ्जनिभं न ते मुखं नलिनी दर्शयते हिमद्युते ।
इति तप्त इव प्रलीयसे स्वयमुत्पीडयसे वियोगिनः ॥ १७ ॥
न विधुन्तुद किं विधुं रदैरमृतं चर्वसि पर्वणि द्विषम् ।
इति ते सकलं वपुर्भवत्यथवा क्षीणहृदां क्व बुद्धयः ॥ १८ ॥
विरहातुरचेतनो मुहुः स्फुटमित्याकुलमालपन्नसौ ।
जगदे जगदेकनायिना हरिणा नन्दनभाववेदिना ॥ १९ ॥
अपि विक्लवता भवादृशां किमसौ धैर्यमुरीकुरु स्वयम् ।
प्रकटं त्रपया वदामि किं तव युक्तः पुनरासुरो विधिः ॥ २० ॥
रमणीहरणोपदेशिनि स्फुटमित्युक्तिपरे हरौ गते ।
अथ किङ्करणीयताजडश्चिरचिन्तोऽजनि पाण्डुनन्दनः ॥ २१ ॥
उदितोदितदन्तदीधितिप्रसरेणैव शरीरिणीमिव ।
अथ वाचमुवाच काचन द्रुतमागत्य नराय दूतिका ॥ २२ ॥
धिगनङ्ग इति स्मरं विदुः सति सङ्क्रन्दननन्दन त्वयि ।
अविलोकित एव यद्भवानहरन्मङ्क्षु हरिस्वसुर्मनः ॥ २३ ॥
ध्रुवमस्ति कृशानुसंनिभं त्वयि कन्दर्पजयोद्भवं महः ।
परितापयसे किमन्यथा शिशिरैश्चारपि हृद्गतः सखीम् ॥ २४ ॥
विरहानलतापसम्भ्रमैरिह पीडा दयितस्य मा स्म भूत् ।
हृदयं सुभग त्वदाश्रयं मुहुरस्रैरिति सा निषिञ्चति ॥ २५ ॥
परितापभिदे च या ददे हृदि तस्याः कुसुमालिरालिभिः ।
अनयैव जघान तां स्मरः सविधप्रापितया हृदाश्रयः ॥ २६ ॥
विदधेऽश्रुजलैः सकज्जलैरियमेणाङ्कसमानमाननम् ।
सविधे कथमन्यथा सखीवदनैर्म्लानतनुभिरम्बुजायितम् ॥ २७ ॥
वलयार्थकमङ्गुलीयकं वलयं चाजनि कण्ठिकास्पदम् ।
कटिसूत्रपदं च कण्ठिका सुदृशस्त्वद्विरहे कृशाकृतेः ॥ २८ ॥
स्वप्नेऽपि हि सा सह त्वया स्पृहयन्ती परिरम्भणोत्सवम् ।
विगलद्वलयान्तरायकौ निजबाहू बहु मन्यते कृशौ ॥ २९ ॥
भिदुरोष्ठकपाटसम्पुटस्फुटदृश्याननवर्त्मना प्रियः ।
हृदयादपि मा स्म गादिति ध्रुवमालीरपि नो वदत्यसौ ॥ ३० ॥
विरहोद्भवमोहदर्शितप्रतिदिक्तावकमूर्त्तिकैतवात् ।

व्यथयत्यधिकं सखीमिमां रचितानेकतनुर्मनोभवः ॥ ३१ ॥
मदनो मुहुरीरितैः शरैर्ध्रुवमभ्यस्यति सूक्ष्मवेधिताम् ।
कृशतां नयते यतः कृशामपि वेध्यीकृतविग्रहामिमाम् ॥ ३२ ॥
विविधायुधमन्त्रकोविदो दहनस्तम्भविधिं खलु व्यधाः ।
विरहानलविह्वले सखीहृदि तिष्ठन्नपि यन्न तप्यसे ॥ ३३ ॥
विरहव्यथया ननु द्विधा स्फुटदस्या हृदयं मृगीदृशः ।
निजदोर्युगबाढबन्धनैः करुणासिन्धुमराल पालय ॥ ३४ ॥
वलतां पुनरेव जीवितं स्वयमस्या लघु कण्ठमार्गतः ।
परिपीतभवन्मुखाधरद्रुतपीयूषरयप्रवाहितम् ॥ ३५ ॥
दृग्वारिबिन्दुभिरुरोजतटे लुठद्भिर्भिन्नाञ्जनैः करजलेखनिकागृहीतैः ।
एतं कथञ्चन वियोगभयातुरं यं लेख्यं विलिख्य ननु मां भवते न्ययुङ्क्त॥३६
इत्यर्पितं चतुरया त्वरितं गृहीत्वा लेखं निधाय हृदि मूर्ध्नि च जातरागः
हर्षाश्रुपूरहतवर्त्म मुहुः प्रमार्ज्य चक्षुः कथञ्चिदपि वाचयति स्म पार्थः॥३७
दृग्भिः प्रेमसमुद्रवीचिभिरभिक्लिन्नोऽपि भिन्नोऽस्मि न
स्वान्ते मन्मथदावपावकभृति क्षिप्तोऽपि तप्तोऽस्मि न ।
सौभाग्यैकनिकेतकान्तिलहरीलीलाभिरन्तर्मुदं
दत्से निर्दय वज्रसारघटितं जाने भवन्तं ततः ॥ ३८ ॥
प्रियासक्ते कलुषः क्वचन परिहासोऽपि न जने
न च ध्यातः कान्ताललिनि कलविङ्केऽपि कलहः ।
न बाल्ये पाश्चालीमिथुनमपि तल्पे विघटितं
न तत्कस्मात्किं कृप कृपणायां मयि मनः ॥ ३९ ॥
इति लेखमेष निबिडप्रेमतरङ्गां विचार्य चिरमन्तः ।
उद्भासमाननिर्भरभावभरो हृदि मुदा निदधौ ॥ ४० ॥
वक्षोजापतितैरिति स्तनपरीरम्भप्रमोदं दधत्
दृष्टिद्वन्द्वपरिच्युतैरिति मुहुर्नेत्रावलोकस्मयम् ।
सद्यःपाणिरुहाङ्कितैरिति नखस्पर्शोत्सवं साञ्जनै-
र्बाष्पैर्निर्मितमेष वीक्ष्य लिखितं कैः कैर्न भेजे रसैः ॥ ४१ ॥
धीरोऽसि विश्वजयिनोऽपि मनोभवस्य नो चेद्बिभेषि ललनाललितायुधस्य ।
तत्किं कुलीन तव भीतिकृते न भाति स्त्रीघातपातकमपि स्ववियोगदत्तम् ॥ ४२

दूतीमुखादिति च कर्णसुधोर्मिसेकमाकर्ण्य चित्तदयितामुखवाचिकं तत् ।
कुन्तीसुतो विरहवेदनयातिमन्दमानन्दगद्गदितवर्णमुवाच वाग्मी ॥४३॥ (युग्मम्)

सा दृष्टैव तदाऽहरन्मम मनस्तल्लब्धये लम्भिता
ध्यानैः कैरिव कैरवाक्षि न वयं तादृग्वियोगातुराः ।
किन्तु त्वं स्वयमावयोरविरलप्रेम्णोरभूः सङ्गम-
द्वारं मौक्तिकतोरणस्रगुपमामस्योद्गिरन्ती गिरम् ॥ ४४ ॥

विज्ञाप्या सुदति त्वया पुनरिदं सा स्वामिनी मद्गिरा
सद्यः पावकतप्तकाञ्चनमयी किं देवि मूर्तिस्तव ।
कामक्षोणिभुजङ्गजङ्गमपुरि स्वान्तप्रतिष्ठैव यत्
तापं कश्चन चन्दनादिभिरपि द्रव्यैरमार्ग्यं व्यधाः ॥ ४५ ॥

दृष्ट्वा चन्द्रमपि त्वदाननधिया यद्देवि देवोऽल्यहं
तापत्याकुलितो जगाद किमयं ध्यातोऽपराधस्त्वया ।
नन्वि त्वल्लघुलाभलम्पटधिया निद्राणनिद्राभर-
प्रारम्भस्य मुदे ददामि न मम स्वप्नेऽपि यद्दर्शनम ॥ ४६ ॥

तत्रैव रैवतकसीमनि कैतवेन केनापि गच्छ मम दर्शय देवि मूर्तिम ।
इत्युक्तिभिर्विजयिना जवतो नियुक्ता सा दूतिका व्यधित हर्षपदं सुभद्राम् ४७

इति श्रीगूर्जरेश्वरमहामात्यश्रीवस्तुपालविरचिते नरनारायणानन्दनाम्नि
महाकाव्ये दूतिकागमनं नामैकादशः सर्गः ॥

त्वत्कीर्तिज्योत्स्नया जाते नीरे नीरेशितुः सिते ।
नेक्ष्यन्ते पक्षिभिर्नस्तु वस्तुपाल घनाश्रयः ॥ ११ ॥
मुकुलितकमलोदयः कवीन्दुः क इव न काव्यसुधानिधिर्बभूव ।
स्फुरदुरुविभवस्तु वस्तुपालः कविसविता कविताप्रभाभिरामः ॥ १२ ॥

## द्वादशः सर्गः

सुभद्रा रैवतोद्याने रथाङ्गमिथुनान्यथ ।
कदापि नापश्यामास दिवापि यदनन्तुना ॥ १ ॥
इतोऽपि तत्र कौन्तेयः सप्रमोदमनर्त्तयत् ।
अथ कल्पवपुःकान्तिकलापेन कलापिनः ॥ २ ॥
दर्शनं विपिने तस्मिन्नकस्मादुभयोरभूत् ।
मिथोऽपि हृदयादेव पुरो निःसृतयोरिव ॥ ३ ॥

रथारोहेऽथ तौ दत्तहस्तालम्बलसद्रसौ ।
नाक्रष्टुमशकत्पार्थो नारोढुं च हरिस्वसा ॥ ४ ॥
दधत्या स्यन्दनारोहे चापल्यमथ बालया ।
तडिल्लतायितं मेघभासो वासवजन्मनः ॥ ५ ॥
रथास्यप्रथमोत्पातः पार्थस्याभवदुत्सवः ।
प्रियया प्रथमाश्लिष्टकण्ठपीठस्य भीतया ॥ ६ ॥
रथस्खलनभीलोलकान्तालिङ्गितवक्षसः ।
पार्थस्य रैवतप्रान्तोपलैश्चिन्तामणीयितम् ॥ ७ ॥
लोलाः कोलाहलभृतः पार्थभ्रूभङ्गभङ्गुराः ।
सुभद्रारक्षका जग्मुर्बलभद्रसभामथ ॥ ८ ॥
सुभद्रा सम्प्रति स्वामिन् रैवतावनिसीमनि ।
याता मन्मथपूजार्थं पार्थेनापहृता हठात् ॥ ९ ॥
इत्याकर्ण्य तदा सीरी सकम्पमधरं दधौ ।
सद्योहर्द्दासकोपाग्निनवर्कोलाग्निवासमम् ॥ १० ॥
सौनन्दिनः सदामद्यपानपाटलिते दृशौ ।
पतन्त्यौ मुहुरस्त्रेषु व्यञ्जयामासतुः क्रुधम् ॥ ११ ॥
अदर्शि बलदेवस्य कपोलामलदर्पणे ।
तरुणारुणिमच्छाया प्रकोपः प्रतिबिम्बितः ॥ १२ ॥
कोपे बलस्य नापीडि दष्टोऽप्योष्ठस्तदा रदैः ।
आसक्तरेवतीदन्तमन्तताभ्यामभासुरः ॥ १३ ॥
रत्नपादासने पार्ष्णिपिष्टे घर्माम्बुवाहिते ।
अङ्घ्रिक्षोभाद्द्विषन्मौलिक्षतजस्यास्मरद्धलः ॥ १४ ॥
कपिशाः कम्पितोऽभीक्ष्णमाटोपादुत्पतिष्णवः ।
अवापुः कोपदावाग्निर्कालार्लीलां सभाभटाः ॥ १५ ॥
अभिधित्सन् गदः किञ्चित् प्रसृतेऽदादृशान्मुखे ।
लोलां जिह्वां प्रकोपस्य हृद्राजस्तर्ज्जनीमिव ॥ १६ ॥
प्रौढोपनतसङ्ग्रामोदश्चद्रोमाश्चकञ्चुकः ।
सद्योऽङ्गीकृतवर्मेव कृतवर्मा व्यराजत ॥ १७ ॥
यया चपेटया क्रुध्यन्नृसमाहत सात्यकिः ।
तया यदि भुवं हन्यात्कणोऽप्यस्याः क तद्भवेत् ॥ १८ ॥

स्मरश्चापशरैः पौष्पैरपि विश्वत्रयीजयी ।
तीव्रास्त्रेषु क्षिपन्नक्षि त्र्यक्षस्यापि भयं व्यधात् ॥ १९ ॥
अङ्गुल्यङ्गुष्ठमर्देन भूषारत्नान्युपापतिः ।
प्रकोपे तीव्रतसाङ्कदग्धानीव व्यचूर्णयत् ॥ २० ॥
ग्रासागतमिव ध्यायन्नुत्सुकः शात्रवं शिरः ।
क्रुद्धः स्फुटकटत्कारं निष्पिपेष रदान् रदैः ॥ २१ ॥
दन्तपङ्क्तिमिथःपेषस्फुलिङ्गावलिमालिनीम् ।
ज्वालां कोपानलस्येव दधौ जिह्वां गवेषणः ॥ २२ ॥
ध्वनिः शनैरभूत्पाणिप्रहतस्तम्भसम्भवः ।
क्षुभ्यदम्भोनिधिर्ब्रह्मयद्भूधरः स्फुटदम्बरः ॥ २३ ॥
चूर्णीकृताङ्गुलीमुद्रावज्रेणाताडयद्भुवम् ।
भुजस्पर्द्धिभुजङ्गेन्द्रपीडिना पाणिना पृथुः ॥ २४ ॥
यथार्थवर्णमुत्थाप्य किञ्चिद्भ्रूभङ्गसञ्ज्ञया ।
अथोर्ध्वस्थितमित्यूचे मीरी संरम्भया गिरा ॥ २५ ॥
वाहैर्मरुत्वरैः पार्थ गच्छेदं मद्गिरा वद ।
क रे व्रजसि दौर्मन्त्र्यवृथावस्कर तस्कर ॥ २६ ॥
कौलिन्यं कलिवीरत्वं विद्वत्ता शस्त्रवेदिना ।
सौहार्दं च त्वयामर्दि सर्वमेकपदे हहा ॥ २७ ॥
त्वां वंशपांसनं प्राप्य सुग्वद्दृग्यो वियोगिनाम् ।
इन्दुः सर्वाङ्गविस्तीर्णकलङ्कोऽद्य भविष्यति ॥ २८ ॥
वृत्तेऽस्मिन्निजसूनोस्ते श्रुते सदसि लज्जितः ।
सर्वाङ्गीणानिमेषाक्षो वज्री वर्त्तिष्यते कथम् ॥ २९ ॥
ख्यातः सख्या त्वया साक्षादस्माकं गर्वपर्वतः ।
ऐन्द्रे तं भवता भित्त्वा दर्शितैव कुलीनता ॥ ३० ॥
मूढैरस्माभिरध्यायि क्रूर यत्त्वयि सौहृदम् ।
तद्विषेऽपि सुधाबुद्धिरङ्गारेऽपि मणिप्रभा ॥ ३१ ॥
उप्त्वा कोपकणं मीरदारिते त्वदुरःस्थले ।
प्रतापपादपं विश्वव्यापिनं वर्द्धयेऽधुना ॥ ३२ ॥
भवन्तं तुषवद्भस्मीकृत्याद्य मुशलाहतैः ।
घातयिष्ये भवद्बन्धुनिश्वासैः कीर्त्तितन्दुलान् ॥ ३३ ॥

स्थिरीभव क्व गन्तासि मयोपक्रियतां तव ।
दर्शयिष्येऽसिदण्डेन स्वर्गं पापीयसोऽपि यत् ॥ ३४ ॥
कुलजीवितमस्माकं कन्येयं भवता हृता ।
त्वामेकमेव मे हन्तुः क्व भविष्यति निर्वृतिः ॥ ३५ ॥
राधा यत्काकतालीयनीत्या विद्धार्जितं यशः ।
तत्ते लुम्पाम्य वक्त्राणि स्मेरयिष्ये धनुष्मताम् ॥ ३६ ॥
रे चोर यदि सोजन्यं तावृक्षमपि विस्मृतम् ।
तत्किं मद्ग्रामपादोऽपि विस्मृतोऽरिकपालभित् ॥ ३७ ॥
मास्त्वमस्त्वस्तधैर्यस्य तव मौलिं प्रपित्सति ।
मदङ्घ्रौ त्वच्छिरोरत्नाङ्कुराः क्षतिकरा यदि ॥ ३८ ॥
हृदयात् कृष्णमुत्तार्य त्वयेदं दुष्कृतं कृतम् ।
निःशङ्कमिति सीरेण करिष्ये तद्विधा तव ॥ ३९ ॥
इत्युक्त्वा प्रेष्य तं दूतं कामपालः करालदृक् ।
उवाच कृतवर्माणं क्रोधसंज्वलितया गिरा ॥ ४० ॥
सेनामेनां समादाय गच्छ सत्यमत्र सत्वरम् ।
तथा कुरु यथा नायं जीवन् याति मलिम्लुचः ॥ ४१ ॥
उत्तिष्ठोत्तिष्ठ युद्धैकमहामात्त्विक सात्यके ।
गच्छाभीभिः समं भूपगृह्यतां गृह्यतां शठः ॥ ४२ ॥
हन्त मा स्म विलम्बन्त भवन्तः सन्ततोज्ज्वलाः ।
पृष्ठेऽहं प्राप एवैष पुरस्कृत्य मुरद्विषम् ॥ ४३ ॥
इत्यादेशं समासाद्य कृतवर्मादयोऽचलन् ।
दृश्यदृष्टपुरोधावद्धूतस्यन्दनकेतनाः ॥ ४४ ॥
सेनायाः कोऽप्यभूद्वेगस्तदार्जुनजिघृक्षया ।
श्यामोऽपि येन निर्मुक्त उच्छ्वासमायानुभावितः ॥ ४५ ॥
इतः पुरःस्फुरत्क्रूररज्यल्लोचनरोचिषा ।
दहन्निव दिवं मूर्त्तकोपपावककीलया ॥ ४६ ॥
पादसम्पातसंरम्भपीडया मूर्च्छितामिव ।
सिञ्चन्नमर्षघर्माम्भःपूरैरुर्वीं पदे पदे ॥ ४७ ॥
मुखाग्रधूननन्मित्रोपालम्भैरिव भारितम् ।
वेपमानं वहन्नोष्ठं ययौ सीरी हरिं प्रति ॥ ४८ ॥ (विशेषकम्

हृदन्तर्दीप्तकोपाग्निस्फुलिङ्गैरिव दाहिभिः ।
अथाक्षरैः खरां वाचमित्युवाचाच्युतं प्रति ॥ ४९ ॥
स कुलीनः कलाशाली शूरः साहसिकाग्रणीः ।
सुहृत्त्वात्पुषन्मैत्रीमद्याप्युत्तिष्ठसे न किम् ॥ ५० ॥
निजं प्रकटितं तेन शौर्यं चौर्यं वितन्वता ।
अनन्विष्यंस्त्वमप्येनं शौरे शूरो भविष्यसि ॥ ५१ ॥
श्वभ्रे स याति चेत्तत्त्वं हन्सि भूम्याङ्घ्रिनुन्नया।
यदि याति दिवं दुष्टस्तत्साध्यं सिद्धमेव मे ॥ ५२ ॥
वध्यः सुहृदपि स्नेहक्षयकाङ्क्षी बलीयसाम् ।
वायुरग्निवयस्योऽपि निर्वापयति दीपकम् ॥ ५३ ॥
पद्मश्रीहरणव्यग्रः प्रत्यूषे पद्मबन्धुना ।
वर्द्धितोऽपि स्वयं पश्य कां दशां नीयते शशी ॥ ५४ ॥
अपदोऽप्यसकर्णोऽपि लङ्घ्यमानो दशत्यहिः ।
परिभूतोऽप्यनुद्योगी त्वं तस्मादपि हीयसे ॥ ५५ ॥
विलम्बयति सौहार्दं यदेनं प्रति सम्प्रति ।
तत्सङ्गतस्य तेनैव लावण्यर्द्धीकृतो भया ॥ ५६ ॥
कौन्तेये सहजा मैत्री कृत्रिमत्वेन वर्द्धिता ।
सोऽप्यभूत् कृत्रिमः शत्रुरद्य तत्किमुपेक्ष्यते ॥ ५७ ॥
विरुद्धः स्वोऽपि हन्तव्यो हन्ति प्रत्युत रक्षितः ।
निजाङ्गजोऽपि रोगः स्यादच्छिन्नः किं न मृत्यवे ॥ ५८ ॥
अमर्षमिव वर्षन्तमिति निष्ठुरया गिरा ।
सुधीः सान्त्वयितुं ज्येष्ठं चक्रपाणिः प्रचक्रमे ॥ ५९ ॥
त्वदादेशविधेयोऽस्मि किमार्य मयि कुप्यसि ।
वद कार्ये प्रवर्त्तन्ते धीमन्तः सहसैव किम् ॥ ६० ॥
सहसा महसा दृप्तां वीक्ष्य दीपे झलज्झलाम् ।
मणिभ्रान्त्या पतन्तः कां लभन्ते शलभा दशाम् ॥ ६१ ॥
सुधांशुधामभिर्धौते सुखशायिनि पन्नगे ।
अध्यात्वा हारबुद्ध्या कः क्षिपन्पाणिं न शोचते ॥ ६२ ॥
भङ्गं यात्येव जीमूते गर्जितर्जितदिग्गजे ।
उत्पतत्करटिभ्रान्त्या सहसा साहसी हरिः ॥ ६३ ॥

वशीभवन्ति विश्वानि विनमन्ति स्वयं द्विषः ।
पुरः स्फुरति दासीव श्रीर्विमृश्यविधायिनाम् ॥ ६४ ॥
निर्विवेके निरुत्साहाः साहसिन्यपि सम्पदः ।
भूरिभूषाभिरामेऽपि कामिन्य इव दुर्भगे ॥ ६५ ॥
द्वेषिपेषेऽपि मुञ्चन्ति मृदुत्वं न कलाभृतः ।
तमो हन्ति रविर्ध्वान्तं तदेव शिशिरः शशी ॥ ६६ ॥
पश्योष्णशीतयोः स्फीतमन्तरं तरवो यतः ।
दवदग्धाः प्ररोहन्ति न सिन्धून्मूलिता पुनः ॥ ६७ ॥
मतिप्रतानिनीं कश्चित् शास्त्रार्थजलशाद्वलाम् ।
दग्ध्वापि कोपदावेन जयाख्यं फलमीहते ॥ ६८ ॥
शौर्यधैर्यावधौ पार्थे व्यापृता पृतना कुतः ।
सहसैव त्वया दीप्ते हुताशन इवाहुतिः ॥ ६९ ॥
धीमान्द्रुतद्रुताहूतस्वजनव्रजवेष्टितः ।
भर्त्ता धनञ्जयस्तावदावाभ्यामपि दुर्जयः ॥ ७० ॥
दासीव स्वेच्छया यस्य मृतिरायाति याति वा ।
स केन रुध्यते युद्धकुपितस्तत्पितामहः ॥ ७१ ॥
निघ्नन्तं हन्त चापेन द्रोणं शापेन वा युधि ।
धनुर्वेदे च वेदे च दक्षं कक्षीकरोतु कः ॥ ७२ ॥
जय्यन्ते केन धावन्तः कौरवाः पार्थगौरवात् ।
सहोत्थवज्रवर्मत्वक् कर्णो येषां सखा पुरः ॥ ७३ ॥
भ्रश्यद्भ्रसिधरां भ्राम्यद्गदामुत्कारसत्कृताम् ।
सोढा हक्कामपि त्वत्कः को हिडम्बविडम्बिनः ॥ ७४ ॥
सत्त्वस्ये बन्धुरोधेन कुध्येत्यादि युधिष्ठिरः ।
तत्तहृत्पानवज्राग्नौ क त्वं काहं क वा जगत् ॥ ७५ ॥
तेन सार्द्धमिति स्पर्द्धा युद्धे विजयसंशयः ।
किन्तु चिन्त्यः निःशेषकुलापचयनिश्चयः ॥ ७६ ॥
को वा कोपोऽर्जुने तस्मिन्सा स्वयं रागिणी ययौ ।
स्वसुः कथाप्यसौ लज्जाकृते कोपस्य कः क्रमः ॥ ७७ ॥
कन्या कस्यापि देयैव हीनः केन गुणेन सः ।
कुन्तीकुक्षिसरोहंसः कुरुवंशशिरोमणिः ॥ ७८ ॥

हरः पर इवैश्वर्ये शास्त्रे गुरुरिवापरः ।
स्मरोऽन्य इव सौन्दर्ये शौर्ये किन्तु स एव सः ॥ ७९ ॥
तत्कोपस्त्यज्यतां तस्मै स्वसेयं दीयतां स्वयम् ।
आवां गच्छाव एवाशु सैन्यं यावन्न हन्यते ॥ ८० ॥
इति हलभृतो विश्वस्वामी सुधोर्मिकिरा गिरा
विषमिव रुषं मन्त्रज्ञोऽसावपास्य शनैः शनैः ।
अचलदचलप्रेमा क्षेमङ्करोऽथ किरीटिने ।
स सममसुना तूर्णं पूर्णाभिलाषलसन्मनाः ॥ ८१ ॥

इति श्रीगूर्जरेश्वरमहामात्यश्रीवसन्तपालविरचिते नरनारायणानन्दनाम्नि
महाकाव्ये सुभद्राहरणो नाम द्वादशः सर्गः ॥

शूरो रणेषु चरणप्रणतेषु सोमो वक्रोऽतिवक्रचरितेषु बुधोऽर्थबोधे ।
नीतौ गुरुः कृतिजने कविरक्रियासु मन्दोऽपि च ग्रहमयो न हि वस्तुपालः ॥ १२ ॥

# त्रयोदशः सर्गः

स्मितशक्तिरितोऽपि कोपतप्तस्वरवाक्यैः समराभिसाम्य पार्थः ।
अपि धन्विभिरन्वगामि भूपैः कृतवर्मादिभिराद्रैरौद्रगोषैः ॥ १ ॥
प्रथमाहितदृप्तहृतभीष्मप्रमुखात्मीयसमग्रवर्गदुर्गः ।
समनीनहदप्यथो पृथाभूः पृतनां शत्रुषु योद्धुमुद्धरेषु ॥ २ ॥
अथ तस्य चमूयुगस्य तूर्यध्वनितैः कर्णरसायनैर्भटानाम् ।
गुरुमन्दरकन्दरोदरोत्थप्रतिशब्दद्विगुणैर्जगज्जगाहे ॥ ३ ॥
इति वर्मभृतः क्षणेन दत्त्वा चिरदाक्षिण्यवशाद्दृशं प्रियासु ।
प्रणिपत्य गुरून्विनर्त्तिताम्रा वरवीराः समरश्रिये विलेसुः ॥ ४ ॥
परिरम्भपरप्रियाकुचाग्रश्लथबन्धं रणतूर्यतर्जितात्मा ।
कवचं पुलकोच्चयप्रपञ्चैस्त्रटिति त्रोटयति स्म कोऽपि वीरः ॥ ५ ॥
परिरम्भिणि वल्लभे रणान्तर्गमनोत्के कृतकं परा हसन्ती ।
कलिताशकुनार्त्तिरेष मा भूदिति दक्षाभिनिनाय हर्षमिश्रैः ॥ ६ ॥
अपि चाटुगिरा प्रिये समन्तादददाने परिरम्भणं रणोत्के ।
चलितेऽपि च धीरपादपातं पुलकं काचिदुवाह वीरपत्नी ॥ ७ ॥
अयि वीरशिरोमणिः पिता मे धिङ्मां तुभ्यमदत्त कातराय ।
विमनस्कमवेक्ष्य युद्धबुद्धौ प्रियमुत्साहयति स्म काचिदित्थम् ॥ ८ ॥

समरोत्सवसम्पदुत्सुकोऽन्यः स्वयमङ्गीकृतलोहघातपातः ।
रतयाचनवाचि वल्लभायां कुसुमेषोरिपुभिः क पीड्यते स्म ॥ ९ ॥
अपि चाङ्ककरोऽधुना छिरोऽमाविति धैर्येण निवार्य पाणिकम्पम् ।
तिलकं समरोत्सुकस्य सूनो रचिताशीर्वचनं चकार काचित् ॥ १०
जनकेन महादरेण भर्त्रा मम भग्नोऽयमिति श्रुतिर्न दत्ता ।
इदमश्रुतपूर्वमद्य रुध्यं भवतेत्याह सुतं रणोत्कमेका ॥ ११ ॥
हृदि मे दयितास्ति तद्रतं प्राग्युधि मा भेत्स्यति तत्र कातराक्षी ।
रमणीं रसिकः पुरोऽप्यपश्यन्निति कश्चिच्चपलं चचाल वीरः ॥ १२
करकं जलपूरितं वहन्त्यां चलितायां सममेव वल्लभायाम् ।
युधि कोऽपि रसेन कम्पमानः सुभटो भात इवेतरैरशङ्कि ॥ १३ ॥
परिरम्भपरम्परां प्रियायै गृहमर्वस्वमपि द्विजाय दत्त्वा ।
रिपुमूर्ध्नि पदं प्रभो जयं च प्रसभं दातुमथाचलद्भटोघः ॥ १४ ॥
बलमिन्द्रसुतस्य जैत्रमेकं ध्रुवमिन्द्रावरजस्य तूर्णमग्रे ।
अचलन्नचला इवेन्द्रवैरप्रगुणा वारिदगर्जितो गजेन्द्राः ॥ १५ ॥
वलयोर्वलितो हयाः प्रसस्रुः कवलीकर्तुमिवारिवीरवारम् ।
प्रविदारितकृतान्तचक्रकोशाः पदरोक्षमितादरप्रतापकाला: ॥ १६ ॥
रथिनामिव कीर्तिभिः सिताभिः स्फुटवृत्तप्रगुणाभिरङ्कितोभिः ।
नवकेतनमञ्जरीभिरुच्चैरभिचितव्योमपथा रथाः प्रचेलुः ॥ १७ ॥
रथचित्कृतिससिंहपौहपागजगर्जाजितसरा मदोष्मभाजाम् ।
कवलीकृतदिग्गणोऽपि दूरं हृतहृत्कम्प भुजाभृतां ममज्ज ॥ १८ ॥
चलितेषु बलेषु शेषकूर्मेश्वरदिक्कुञ्जरशैलमुक्तभारा ।
वरवीरविविक्तसत्त्वमित्थं तरणेन प्रभो मही विलोला ॥ १९ ॥
चलिते चपलं बलद्वयेऽस्मिन्नुदयहलिभरच्छलादधारि ।
समुदेष्यदुदारबाणवारश्चनिर्भान्त्या वियतापि वारबाणम् ॥ २० ॥
रसपाणिपुटौ समप्रणुन्नाविव धारारत्नमाभिमुख्यभाजौ ।
अथ तालरवेण नर्तयन्तौ स्पमग्रे मिलितौ बलाम्बुधी तौ ॥ २१ ॥
सुभटः सुभटं रथी रथस्थं तुरगस्थं तुरगी गजं गजश्च ।
समवाप पुरःप्रयुक्तचित्तप्रबलाकृष्टिबलैरिवोरुवेगम् ॥ २२ ॥
द्विषतां क्षतजं चिराय पेयं ध्रुवमत्रेति मुदा प्रवृत्तनृत्तैः ।
असिभिर्यमकिङ्करानुकारैरनिरोधाः सुभटा मिथोऽभिजग्मुः ॥ २३

चरणोद्धतधूलिधूमिताशा दृढखड्गाहतिविस्फुटस्फुलिङ्गाः ।
मणिकञ्चुकदीपिनोऽथ देहुर्युधि ते कोपदवा इवाङ्गवन्तः ॥ २४ ॥
प्रतिघातविनिस्सृतां पुरस्तात्पदचारस्खलनोद्धुरापराधाम् ।
असिनाऽन्त्रततिं विकृत्य कोपाच्चलितः कोऽपि जघान वैरिवीरम् ॥ २५ ॥
कृतहुङ्कृतिकम्पितोष्ठमन्तर्वन मन्त्रं कमपि ध्रुवं जपन्तौ ।
अपरौ करवालसर्पदंशात्पतिताद्वाशु मिथो नरेन्द्रवीरौ ॥ २६ ॥
अरिपु प्रबलप्रकोपढक्काध्वनितैरेव भयोज्झितायुधेषु ।
युधि कस्यचिदक्षितेजसैव क्षतजालिप्त इवाभवत्कृपाणः ॥ २७ ॥
युधि कोऽपि ददर्श कुम्भिकुम्भौ स्मृतकान्ताकुचविभ्रमच्युतास्त्रः ।
अपि तस्य कराङ्गलीलया तौ त्रुटितौ तु क्व किलात्र तद्दृढत्वम् ॥ २८ ॥
अपरो हरिमारथीनभिन्दन्नुदितक्षत्रचरित्रधीपवित्रः ।
रथिनः परिपातयन् रथाग्रं व्यधित प्रागिव सज्जितं रथिभ्यः ॥ २९ ॥
असिघातहतैककोरुमूलं तुरगेभ्यश्चतुरोऽश्ववारवारम् ।
परिपात्य परोऽङ्घ्रिपार्ष्णिपाते त्रुटितं क्षुण्णकलापकं जघान ॥ ३० ॥
परिणन्तुमुदग्रदन्तदण्डाः स्फुटमन्योन्यकृताङ्घ्रिपादशङ्काः ।
मदनिर्झरझात्कृतोऽभ्यधावन्नभितः कुम्भिवराः करानुदस्य ॥ ३१ ॥
अमिलन्करिणो रणेऽभिषिक्ताः स्वगमन्योन्यकरोत्थशीकरौघैः ।
दशनाग्रमिथोहतिस्फुलिङ्गस्फुटनीराजनराजिराजमानाः ॥ ३२ ॥
समुदस्य करी करीन्द्रमेकः करलीलाकुतुकान्नभोऽन्तराले ।
क्षितिभङ्गभियेव दन्तवासे निपतन्तं बिभराम्बभूव भूयः ॥ ३३ ॥
अपरः प्रविघोरदन्तघातो युधि विद्रास्य परद्विपं द्विपेन्द्रः ।
अपि वैरिजिताय शाश्वतानि प्रददौ स्वीयनिषादिने यशांसि ॥ ३४ ॥
निजघान विभग्नदन्तमग्रे करिणं वीक्ष्य रुषाभ्युदस्तहस्तम् ।
युधि कोपनकुम्भिनाभियेभः किल नश्यन् जयिनं तमेव तेने ॥ ३५ ॥
रणभग्नरदोऽपि शुण्डयाशु स्वयमुत्खाय रदं रिपुद्विपस्य ।
निचखान रुषैव तस्य मौलौ विजयस्तम्भमिवात्मनो मदेभः ॥ ३६ ॥
रथमेकरथाङ्गमुज्झ तूर्णं परिपूर्णं तु गृहाण कश्चिदेषु ।
युधि कोऽपि महानितीव दन्ती दिवि मित्राय रथान्नदन्नुदासे ॥ ३७ ॥
करिणा युधि केनचित्प्रणुन्नः प्रसभं युग्मरणोद्धतो भटौघः ।
गगनेऽपि मिथःकृतप्रमाथस्त्रिदशीभिः सविधे मुदैव वव्रे ॥ ३८ ॥

प्रहिता बलगौरवेण पूर्वं करिणा केनचिदम्बरे तुरङ्गाः ।
अपतन् भुवि नित्यदत्तफालप्रथिताभ्याससुखेन चाश्ववाराः ॥ ३९ ॥
मणिमण्डनमण्डलीमयूखच्छुरिताङ्गा हरयो महारयेण ।
अभिपेतु रथाग्रभागजाग्रद्ध्वजबुद्ध्यैव मिथोऽपि सत्त्वभाजः ॥ ४० ॥
हयहेषितनूयमानमानोद्धुरहक्कारवकारिणोऽश्ववाराः ।
हठहेतिहतिस्फुटस्फुलिङ्गक्षतधूलीतमसो रणं वितेनुः ॥ ४१ ॥
कृतहर्षितहेषितं महाश्वो युधि पाश्चात्यपदद्वयेन धावन् ।
गगनाङ्गणनर्तिताग्रपादः प्रसभादाह्वयते च शात्रवाश्वम् ॥ ४२ ॥
परघातविनिःसृतैर्निजान्त्रैः खुरकोटीघटनाविनिस्त्रुटद्भिः ।
ततमार्गलतागणैरिवाश्वः खलु नास्खलयत कोऽपि धावमानः ॥ ४३ ॥
रणतूर्यनिनादमुक्तनिद्रः कृतहेषारवलक्ष्यमाणहर्षः ।
अकृत द्विगुणां गतिं वितन्वन् हरिरेकः पुलकोद्गमं नियन्तुः ॥ ४४ ॥
रणमार्गित सिन्धुविलङ्घनोत्कौ कृतफालौ ज्वलितौ पुरोऽन्तरिक्षे ।
हुतसादिकरप्रणुन्नसोल्लौ भुवि पश्चात्पतितौ हरी न कौचित् ॥ ४५ ॥
तुरगाग्रपदान्तदान्तदन्तान्विभिदे कश्चन दन्तिनोऽश्ववारः ।
असिदारितकुम्भमुक्तमुक्तावलिभिर्मूर्द्धनि जातपुष्पवृष्टिः ॥ ४६ ॥
रथिनां स्थिरमूर्द्धविग्रहाणां चतुरः कश्चिदनातुरं तुरङ्गी ।
असिनाशु शिरांस्युदास नूनं कलयन्कन्दुकविभ्रमं सुराभिः ॥ ४७ ॥
छिन्देषु रथेषु पत्तिषु द्रागपतत्कश्चिदुदारहर्षहेषः ।
समरोत्कतुरङ्गिचेतसेव प्रथितस्वर्गमहो मुहुर्महाश्वः ॥ ४८ ॥
परिमुक्तशिरोभिर्हेनदद्भिः क्षणकृत्ताङ्गलवैः समुच्छलद्भिः ।
प्रधनाधिपदैवताधनारादिव वीरैर्वत वभ्रमेऽरुणाक्षैः ॥ ४९ ॥
गलितस्वपरप्रभेदबोधा युधि योधा बधबुद्धिबद्धकक्षाः ।
निजकोपरसार्णवे तु मृत्यौ क्षतजौघे व्यहरन्त कण्ठदघ्ने ॥ ५० ॥
पतितेऽपि शिरस्युदारहक्काभृति कस्यापि भयोद्भवप्रकम्पे ।
अरिभिर्गलितायुधैः कथञ्चिन्नविनिघ्नन्युधि पातितः कबन्धः ॥ ५१ ॥
पतितां पदयोः प्रियां पदाग्रैः करलग्नं सुहृदं चपेटयैव ।
परिताड्य मृतस्य मूर्ध्नि बन्धोर्निहिताङ्घ्रिर्द्विपमाप कश्चिदेकः ॥ ५२ ॥
पतितो युधि भूमिखातदन्तान्तरवर्त्ती करिणो हृदाप्य कुम्भौ ।
पुरुषायितवल्लभाकुचाग्रस्मरणात्कश्चिदधत्त रोमहर्षम् ॥ ५३ ॥

यदधावदुदारपादपातं च्युतमूर्द्धापि भटो रुषारुणाक्षः ।
अपि लोहमयेन तन्निहन्तुः करवालेन किल व्यकम्पि मौलिः ॥ ५४ ॥
पतता शिरसैव शत्रितेन द्विषमाहत्य यशो वितन्य विश्वे ।
अपि नाकवधूमवाप्य रक्तां स्वकबन्धेन ननर्त्त कोऽपि धन्यः ॥ ५५ ॥
रणमूर्च्छिनि वल्लभे गतासुः सहसा कापि दिवङ्गना सतीत्वात् ।
पुनरुच्छ्वसिते शुशोच तस्मिन् विरहात्त्या मरणोत्सुकेव तुष्टा ॥ ५६ ॥
प्रियलाभमहोत्सवाय तेनुः सुरनार्यो विविधानि मण्डनानि ।
तदवाप्तिहृदां तु बाहुभाजां युधि भूषाऽजनि सत्त्वमेकमेव ॥ ५७ ॥
परिरम्भकृतां सुराङ्गनाभिः सह यः सत्त्वभृतां बभूव कम्पः ।
सुदृशां शिखिवर्त्मधाविनानां पुरतो भीतिपदे स एव जातः ॥ ५८ ॥
सविधच्युतमौलिहक्कयोच्चैर्विगलत्कर्त्तरिकाभयान्निरेकात् ।
विनिपत्य कबन्धकेषु धैर्यं कथमप्यादधते स्म यातुधानाः ॥ ५९ ॥
अधिपादतृणीकृतेन कामं वपुषोपक्रियतां मयाऽमुनाद्य ।
इति पक्षिषु भक्षिषु व्यसन्तः पतिताः श्वाससमुर्मुना इवैके ॥ ६० ॥
नवरक्तविलेपिनोऽन्त्रमालाकृतहाराश्च कुटुम्बिनः पिशाचाः ।
वशया पिशितं कपालपात्रैरघसन्प्रेतपतेर्महोत्सवेऽस्मिन् ॥ ६१ ॥
बहुमांसमकीकसं मृतानां मृदुलाहारकृतेऽङ्गकं यदापुः ।
तदपि ध्रुवमाहरन् शृगाल्यो व्यथितास्या गलमग्रभल्लशल्यम् ॥ ६२ ॥
अधिरुह्य मृताङ्गकानि रौद्राः कलमोद्दायितनर्त्तिताऽसिदण्डाः ।
परतीरजुषां द्विषां निहन्तुं तरलं तेरुरसृग्धुनीषु धीराः ॥ ६३ ॥

धावद्दुर्द्धरधीरपादविधुरक्ष्मास्वेदबिन्दूपमाः
क्षत्रासिक्षतकुम्भिकुम्भपतिता मुक्तामणिश्रेणयः ।
दोलारूढसमग्रराजकजयश्रीलोलताविक्लव-
धम्मिल्लग्रथितप्रसूनपटलीपातश्रियं शिश्रियुः ॥ ६४ ॥

इति श्रीगूर्जरेश्वरमहामात्यश्रीवस्तुपालविरचिते नरनारायणानन्दनाम्नि
महाकाव्ये सङ्कुलकलिसङ्कलनो नाम त्रयोदशः सर्गः ॥

श्रीवस्तुपाल जितबालमृणालगर्भे शुभ्रं वितन्वति जगत्त्रय कीर्त्तिपूरे ।
मन्यामहे कुवलकज्जलकोकिलालिकाकोलकोकलदशामभिधा मुधाऽभूत् ॥ १४ ॥

## चतुर्दशः सर्गः ।

समं समन्तात्समचालि शूरैरथो रथोत्सङ्गकृतप्रतिष्ठैः ।
नवीनवीर्यैः कलयद्भिरग्र्यमहो महो वैरियुगान्तहेतोः ॥ १ ॥

चापं तदा दानरुचा रसज्ञासदृक् सहासस्थितितानवेन ।
भल्लेन नद्धं शमनाननाभमग्रेसरं चारु न कः क आप ॥ २ ॥

( सशरशरासनबन्धः )

तत्तच्छरासननिरस्तनिरन्तराल-
नाराचजालचलनाद् गगनान्तराले ।
कृत्तैः किलार्ककिरणैर्धरणी नितान्तं
संशिश्रिये क्षतजनक्षतजच्छलेन ॥ ३ ॥ ( निरोष्ठ्यः )

अधावन्ननिकायाग्य पनास्त्रिचतुरा हिताः ।
योधा एकैकधानास्त्रिपनत्रिचतुराहिताः ॥ ४ ॥

उद्दण्डकाण्डकृतमण्डपडम्बरेषु रक्तोत्थकुङ्कुमरसाकुलभूतलेषु ।
कालेन कृत्तभरमस्तकमोदकानामालोकनेन ननृते समरोत्सवेषु ॥ ५ ॥

( अतालव्यः

प्रभाविलासा परमा रणेषु प्रभाविलासा परमारणेषु ।
रसेन सेनायुगली न जेतुमशक्यतान्योन्यमनूनशक्तिः ॥ ६ ॥

अभूत्सम्भेदनिर्भेदं नरवारितरङ्गितम् ।
नद्याहिनीद्वयं भातनरवारितरङ्गितम् ॥ ७ ॥

असमसमरलीलालाघवेनाशु तूणाविरहिणि शरभारैः शोभमानाभिमानः ।
अहितनिहितमेवादाय बाणं शरीरादधिन धनुषि चैकः साधुवादं च लेभे ॥८॥

( असंयोगाक्षरः

देहे परशरोदारहननं कश्चिदुद्धुरः ।
सेहे वीरवरो धीरश्चानन्याङ्कमृदु स्थिरः ॥९॥ ( गोमूत्रिकाबन्धः

केनचिच्छिरचितो रिपुमिथःसङ्गरोचितमहास्त्रपातनः ।
सङ्गरोचितमहास्त्रपातनः स्ववधूप्रथमकेलिकौतुकी ॥ १० ॥

उवाहासिमहानन्यो भुवा हावानिहानघः ।
घनहानिमहाशत्रुजनहासिमहाः शरान् ॥ ११ ॥ ( मुरजबन्धः

चक्रे रसच्चापलतारयानकः प्रभाततः कोपि मनो रथी रणे ।
प्रभाततः कोऽपि मनोरथी रणे चक्रे रसच्चापलतारयानकः ॥ १२ ॥

लोलकीलालकल्लोलकूले कलकलाकुलः ।
लीलालोकी ललालैकः कालकेलिकलः कलः ॥ १३ ॥ ( द्व्यक्षरः )
ननृतेऽरिवधाय केनचिद्धतेव करस्थितं यमम् ।
चतुरंगबलप्रभासिना च तुरंगबलप्रभासिना ॥ १४ ॥
कलङ्कपङ्कपं चक्रे चक्रे मरमरक्षणम् ।
क्षणं परः परबलं चलत्कलकलः कलम् ॥ १५ ॥
( अविश्रान्तसंदंशिकायमकम् )
शूरः स्थिरतरः स्फारशरभारः पुरः पुरः ।
आर वैरभरस्मेरवीरवारहरः परः ॥ १६ ॥
( षोडशदलकमलबन्धोऽत्रिवर्गो भेदद्वयविभक्तगोमूत्रिकाबन्धश्च )
पूरम्पूरं पुरोऽपारं रोपपूरं परःपरम् ।
रूपं पुररिपोरापपारेरिपुपरम्परम् ॥ १७ ॥ ( द्व्यक्षरः )
कीलालीकलिलाकण्ठदीप्तः कोऽपि क्रियद्वने ।
कीलालीकलिलाकण्ठदावानलनिभो बभौ ॥ १८ ॥
वल्गाधीनं चमूमत्यपरमचरितः मद्गुचिः मङ्गरादौ
केतुं हार्यं रमं दोःसुकृतविभवतः क्षालितश्रीर्व्यकासीत् ।
रक्तासुक्रोड्ज्झहस्तं रमिममरमहानन्यवीरस्तदान्यः
स्यन् शूरं वृद्धरावप्रमभतनमदौचित्यवर्यासिरुग्नः ॥ १९ ॥
( कविनामश्लोकगर्भाङ्कमष्टारं चक्रम् )
वसन्तसचिवः सिद्धधीरालिरसविस्तरम् ।
चक्रे श्रीहारि कृष्णस्य महाकाव्यमदो मुदा ॥२०॥ ( गर्भश्लोकोऽयम् )
वीरनन्दकसत्प्रामो बभारेह परो रुचा ।
चारुरोपहरे भावसोत्प्रासकदनं रवौ ॥२१॥ ( अनुलोमप्रतिलोमश्लोकोऽयम् )
प्रभावनिस्तारकलेवरोऽसौ प्रभावनिस्तारकले वरोऽसौ ।
पदातिरेकः कलहंससारः पदातिरेकः कलहं ससारः ॥ २२ ॥
लोलालोलं लुलोलेली लाली लालल्लुलोल्ललः ।
लोलंलोलं लुलल्लोलोल्लोलल्लीलाललो ललः ॥ २३ ॥ ( एकाक्षरः )
सप्रभावरणः कोऽपि महागौरवलक्षणः ।
सुराबलाली राजीषु वितनार विरोधिनाम् ॥ २४ ॥ ( महायमकम् )
एवं प्रगुणप्रहरणगणशोभाभिर्विभाविभुजविभवाः ।

अमरप्रकरेण भृशं हर्षपुषा पुष्पभरवृष्ट्या ॥ २५ ॥
परमे घनवरवपुषः समरोपचये नरो महिताः ।
परमेघनवरवपुषः समरोपचयेन रोमहिताः ॥ २६ ॥ (युग्मम्)
(प्रथमश्लोकोऽदन्त्यः द्वितीयः समुद्गकः असंयोगाक्षरश्च)

मायारानवरायामा याशमाक्षक्षमाशया ।
रामामाददमामारा नक्षदक्षक्षदक्षन ॥ २७ ॥ (सर्वतोभद्रम्)

सेनामेनां सपत्नस्य भिनद्मि न कथं जवात् ।
वचनानीति स्तनस्य निशम्य स्मयवानथ ॥ २८ ॥ (अमूर्द्धन्यः)

शर्वरीश्वरयशाः स्वयं श्रियः संश्रयो वशशरः ससार सः ।
वैरिवीरवलयव्ययाशया वासविः सरसरावलालसः ॥२९॥ (अपञ्चवर्गः)
(षडक्षरश्लोकोऽयं विशेषकम्)

दहन्महावैरिवनानि लोहनाराचवीचिं दिवि धूमधूम्राम् ।
तदा बभार स्मितदावभा रविभासमानः स विभाऽसमानः ॥ ३० ॥

यश्चक्रेऽस्य क्रमाक्रान्तधरस्य पुरतो रणम् ।
स ददर्श जवाद्दण्डधरस्य पुरतोरणम् ॥ ३१ ॥

नूनं नानेन नुन्नो ना कः कोऽङ्क केकिकाकुकः ।
नाननानेनिनन्नान्नो रेरारोरूरोररः ॥ ३२ ॥
(प्रतिपादविभक्तश्चतुर्व्यञ्जनः)

व्यालावलीविलयवर्यरवालयोऽयं लीलैरिलावलयवारवरैरवार्यः ।
वैराविलो रयलयैरविवारवारी वीर्ये युवा रविरिवाविरलं विवव्रे ॥३३॥
(अन्तःस्थाक्षरोऽयम्)

वव्रे तेन तनश्रीकविभाविविदिनत्तुना ।
नापदालोककरविकलासंसङ्गिना रवः ॥ ३४ ॥
(कविनामाङ्कशक्तिबन्धः वसन्तकविकविनानामाक्षराणि)

रिपुनिकरो बलराजीराजी राजीवशोणनयनेन ।
चक्रे युधे वै कुन्ती कुन्ती कुन्तीसुतेन रुषा ॥ ३५ ॥ (त्र्यावर्त्तयमकम्)

अग्र्यः प्रत्यग्रवल्गत्तरलतरशरं तन्वयं धन्वदण्डं
चण्डं कर्षन्नमर्षप्रसररसलसद्गर्वसर्वस्ववश्यः ।
वर्षन्हर्षप्रकर्षं गगनतलगतस्वर्गसद्वर्गमन्तः
प्रत्यक्षत्र्यक्षकल्पः प्रबलपरबलध्वंसनं स व्यधत्त ॥ ३६ ॥ (आद्यस्वरः)

समरे कोपपरममहारित्रासक्षणः ।
चरमायो जनोच्छ्रायो जेयो मारचणः क मः ॥३७॥ ( खड्गबन्धः )
स्वाजन्यजन्यशमनोऽथ विरम्य रम्यकोदण्डदण्डकृतिना समहारि हारि।
वैधुर्यधुर्यरवकारिभुजालजालमासारसारविशिखस्फुरितेन तेन ॥ ३८ ॥
रोपारोपाङ्कनुज्यावलयवलयशोभासमानः समानः
मत्रामत्राणधीरो रविकरविकटोद्दामप्रतापप्रतापः ।
कामेकामेप नोचैरसमरसमयो नाम रीणामरीणा-
मालीमालीढमत्त्वां रणकरणकटुः क्राणचक्रेण चक्रे ॥ ३९ ॥
( प्रतिपादद्व्यावर्त्तआदिमध्यावसानयमकम् )
युध्यध्वं मा स्म धीरा हरिहयतनयं मामिव ध्यायतामुं
धीरध्वानैर्निपिढ्य स्वबलमिति वहद्दस्तहस्तो विहस्तम् ।
दैत्यध्वंसी नदैत्य प्रियसुहृदमसुप्रायमाश्लिष्य हृष्य-
द्रोमस्तोमं नमन्तःशमनयमनयद्धैर्यधुर्यं स्वपुर्याम् ॥ ४०॥ ( अत्रिवर्गः )

इति श्रीगूर्जरेश्वरमहामात्यश्रीवस्तुपालविरचिते नरनारायणानन्दनाम्नि महाकाव्ये अर्जुनावर्जनो नाम चतुर्दशः सर्गः ॥

लक्ष्म्याभाकृष्टिमुच्चाटनमनयवति स्तम्भमुज्जृम्भदम्भे
दोषे विद्वेषमभ्यन्तररिपुषु मृतिं वश्यतां चित्तवृत्तौ ।
कर्तुं श्रीवस्तुपाल प्रभवसि सकले मण्डले तत्तवैव
श्रीमन्मन्त्रीश मन्त्रे स्फुरति निरवधिः कापि षट्कर्मसिद्धिः ॥ १५ ॥

## पञ्चदशः सर्गः

अथ शिथिलितसर्वस्वार्थमार्थे सुभद्रापरिणयपरिणाहारम्भसंरम्भसम्पत् ।
अहह महमहीयस्तत्पुरं मत्पुरन्ध्रीकलितकलितर्लीलं ध्वनिनिर्मग्नमासीत् ॥ १ ॥
प्रकटितपटुरागा कुङ्कुमाम्भश्छटाभिर्विपुलपुलकताङ्किस्तोरणस्तम्भदम्भात् ।
अतिमहति महेऽस्मिन्नित्यनृत्या व्यराजत् मुररिपुपुरलक्ष्मीरध्वजाग्रद्रू-
ध्वजाग्रैः ॥ २ ॥
हरिनगरनराणां धोरणिस्तोरणस्रग्दलचलनमिषेण भूपरिक्षेपदक्षा ।
महसहजविभूतिर्वासवावासतर्जां चिरमकुरुत चञ्चत्केतुचेलाङ्गुलीभिः ॥ ३ ॥

स्थिरजनितनतनूनां नूनमक्षीणि यूनामपि चपलविलासाभोगमभ्यासयन्त्यः ।
त्वरितमित इतोऽपि भ्रेमुरौत्सुक्यभाजो रतिदयितजयश्रीजीवितव्यं युवत्यः ॥४॥
भवनभुवि सुभद्रा मन्दमभ्यर्णपाणिग्रहमहमदमत्ता यानि तेने पदानि ।
तदभिनयनविद्याहेतवेऽद्यापि हंसो लसदलसगतिर्वाङ्क्षवतां सेवतां सः ॥ ५ ॥
अथ नवरविरश्मिस्मेरकाश्मीरनीरैः परिणयनदिनादौ लक्षरागासु दिक्षु ।
व्यधुरुदयदनङ्गं मङ्गलस्नानमस्याः पतिसुतपितृमातृभ्रातृवत्यो युवत्यः ॥ ६ ॥
सितरुचि शुचि वासो बिभ्रती सम्भृताङ्गं विशदवदनकान्तिः सा वराङ्गी विरेजे ।
कनककमलिनीव स्वच्छगङ्गातरङ्गावलिवलयितमूर्तिः स्पष्टदृष्टाम्बुजश्रीः ॥७॥
स्वयमजनि जनन्या चान्दनं चित्रकं यन्मुखमभवदमुष्यास्तेन लीलाचलभ्रु ।
शरपरिचयचञ्चच्चापचापल्यशाली विधुरिव धुरि वीरः कामवीरध्वजिन्याः ॥८॥
जितवलयविलासं पाणिदेशे यदस्याः परिणयमयमूर्णासूत्रमासूत्रि मात्रा ।
सपदि मदनदेवस्तद्विलोक्य त्रिलोकीविजयिनि निजचापे ज्यापरिस्पन्दमैच्छत् ॥ ९ ॥
अहह सहजनश्यद्दूषणाभूषणालीरुचिररुचिरपङ्क्तादर्पणं दर्पणोऽसौ ।
अपि निरुपममस्याः शोभमानोपमानं वपुरजनि तदन्तर्बिम्बिना बिम्बितेन ॥१०॥
असमकुसुमपुञ्जालीनमन्त्राः स्तुवन्मधुकरकुलरावैराशिषं पुण्यराशिम ।
यदिह पदनतायां गोत्रदेव्योऽप्यवोचन् किमु किमु न तदूचुः श्रद्धया गोत्रवृद्धाः ॥ ११ ॥
परिणयरयचिन्ताकृत्तचिन्तासमर्थानुपनिलयमिवाग्रे मातृवर्गं निवेश्य ।
उदयमयति लग्ने प्रीतिमग्नान्तरात्मा समजनि यदुसार्धः पार्श्वमाप्रतीक्षः १२
हिममहिममनोज्ञं चीवरं पीवरश्रीपुषि वपुषि वसानः स्मानसंशोभमाने ।
मनसिजविजयेन स्फारितस्फूर्तिमन्तर्यश इव विशदांशो बिभ्रदभ्राजतेन्द्रः १३
परिणयपरिणाहिश्रीसमुत्साहि सद्यो मलयजमयचर्चाचित्रकश्रीपवित्रम् ।
रजनिकरनिकारक्रीडितेनेव तेने मुखमकलुषकान्तिस्तम्भसंरम्भमस्य ॥ १४ ॥
कलितसकलभूषागौरवं कौरवोऽसौ स्फटिकमुकुरबिम्बे लम्बमानं निरूप्य ।
वपुरनुपमरूपश्रीसमुद्रं सुभद्रानयननलिनपात्रीकर्तुमत्युत्सुकोऽभूत् ॥ १५ ॥
तुरगमुरगराजच्छायमारुह्य चारुर्मलयजरसविलेपैश्चन्द्रजैत्रातपत्रः ।
अविकलसकलाङ्गस्फूर्तिमन्मूर्तिवैवाहिकसुकृत इवासौ शक्रसूनुश्चचाल ॥१६॥
अथ मुदितमृगाक्षीमण्डलोल्लूलुनादद्विजनतियदुभक्तिप्राप्तहस्तावलम्बः ।
विधुरितविधुसूर्यः कृत्स्नमापूर्य तूर्यध्वनिरनिमिषमार्गं क्रीडितः क्रोडिताशः १७
द्रुततमगति जग्मुः स्फूर्जदूर्जस्वितूर्यस्वनजनितविनोदाः केलिजालान्तरेषु ।

रवदनविलोकश्रद्धयाऽर्द्धप्रकृप्तोज्झितनिजनिजकार्यप्रक्रमाः पौरनार्यः ॥ १८ ॥
रभसमभिकण्ठं काचिदारोप्य काञ्चीमुपचितघनघूर्णद्घण्टिकाघोषरम्याम् ।
रलगति चलन्ती तुङ्गमानद्रुभङ्गादधित कुपितधावन्मूर्त्तकामेभशोभाम् ॥१९॥
विवशमचालीद्बिभ्रती केशपाशं लम्बितमुरसि हस्तन्यस्तमस्यूतमन्या ।
पयश इव मूर्त्तं चित्तभूभूमिभर्त्तुः सुरपतिसुतकान्तिस्फूर्जितैर्निर्जितस्य॥२०॥
ततरमपरस्या जालगर्भं गताया ललितकुलितवेणिः पीवरश्रीरुरोजे ।
तमग्वसुतकायच्छायचौर्यापवादादघटत घटसर्पो मन्मथस्येव दिव्यम् ॥२१॥
ललितललितमूर्त्तिर्मूर्त्तशृङ्गारसारद्रवघटित इवासावुत्पलश्यामलश्रीः ।
रपरिवृढसूनुर्दृश्यमानो न कस्याः कृतमदनविकारो ह्रीविकारं चकार ॥ २२ ॥
मनमपि वहन्ती स्वेदमन्दर्भलग्नं विपुलपुलकदण्डस्यूतमेवास्तबन्धम् ।
ढविरचितशून्यालिङ्गना तद्विलोकादननुत वपुरेका कातराक्षी स्वमख्याम् २३
शितविशिखपातैर्मन्मथोऽन्तस्तथैकां हृदि सपदि तदानीं तद्विलोके जघान ।
विशत भुवि भिन्ना कम्पिता दीनचक्षुर्युगलविगलदश्रुः सा यथा सुश्लथाङ्गी२४
रमुरसि पिण्डीकृत्य हारं तदङ्गप्रतिकृतिमतिसारं पीडयन्ती कराभ्याम् ।
मनसैका गुप्तसीत्कारपीनश्वसितललितलीलामीलिताक्षी गवाक्षे ॥२५॥
किमपि विभावं बिभ्रती कापि लीलाकरकमलसचुम्बत्तन्मुखं वीक्ष्य सद्यः ।
ह सुमृदुकूजद्धूङ्गदष्टाधराग्रं रससरसयदेषा वेत्ति चित्तं मनोभूः ॥ २६ ॥
मुदितमृगाक्षीलोचनार्चिःस्रवन्तीपरिचयपरिरम्भोद्भ्रान्तलावण्यवार्द्धिः ।
रिधवलगृहाग्रं प्राप पार्थः पुरस्ताज्जननयनचकोरार्पायमाणाननेन्दुः ॥ २७ ॥
गतवति तस्मिन्नक्षिमार्गान्मुहूर्त्तं यदचलपदमस्थुः कैरवाक्ष्यो गवाक्षे ।
ह नयनपातैरान्तरैरस्खलद्भिस्तममरुचिर्माक्षाश्चक्रिरे शक्रसूनुम् ॥ २८ ॥
जयिनि कुतुकेन द्रष्टुमभ्यागतानामथ गतवति हृत्वा कामिनीनां मनांसि ।
ङ्गिनि मनोभूरेष निःशेषमासां वपुरपहृतमध्या सम्यगाक्रम्य तस्थौ॥२९॥
ाथ पृथाभूर्मङ्गलप्रत्तपुष्पप्रकरमधुकरालिध्वानदिष्टाग्रवर्त्मा ।
ानग्वचितरत्नद्योतलुप्तावकाशं मधुमथननिकेतोत्सङ्गमङ्गीचकार ॥ ३० ॥
सुरमथनाद्यैः सम्मुखीनाभ्युपेतैः सपदि यदुकदम्बैर्दत्तमानो मनस्वी ।
ासुभद्रालोकसोत्कण्ठचित्तोऽप्यतिमृदुपदगत्या सौधमध्यं जगाम॥३१॥
तमुखकमलायाः कण्टकाङ्कं शरीरं सकलमपि मृणालीकाण्डकान्तं वहन्त्याः ।
मृदुलयानो मानसौका नलिन्या इव सविधमवापत्कन्यकायाः स धन्यः३२
मुहुरवधानात्तैः पलैश्चाक्षरैश्च द्विजवचनविविक्तैः साधिते लग्नसन्धौ ।

गुरुरथ वरवध्वोर्मङ्गलातोद्यनादे विलसति समकालं मीलयामास पाणी ॥३३
विधुविजयिनि यूनोर्नूनमन्यूनहर्षादरसयदमृतोर्मीरास्यपीयूषकुण्डे ।
चिरमुपचिततर्षोत्कर्षमन्योन्यमक्षिद्वयमभिमुखतारामेललीलामिषेण ॥ ३४ ॥
हरहुतवहदग्धं जीवयत्येव कामं परिणयनमखाग्नौ दीपिते दम्पती तौ ।
विविधविधिविधायी वर्त्तयामास धीमान् गुरुरथ पृथुविद्यामण्डलो मण्डलानि ३'
शिथिलकरसरोजा लज्जमाना विकीर्य ज्वलितहुतवहान्तर्लाजमुष्टिं सुभद्रा ।
अकुरुत गुरुवाचा किञ्चिदाचारधूमग्रहणमथ मुखाब्जोत्सङ्गभृङ्गायमानम् ॥३६॥
हरिकरिरथरत्नालङ्कृतिस्त्रैणमुख्यं निखिलविषयलक्ष्मीसारभूतं प्रभूतम् ।
किमु किमु कमलायाः कामुको नो तदानीमदित मुदितचेता यौतके कौतुकेन ३

पवित्रं यन्मैत्र्यं सहजमपि तत् कृत्रिमतया
दृढीकृत्य प्रीताविति जगति नारायणनरौ ।
तदालोके शोकव्यसनवशगानामसहन-
क्षितीशानां साक्षादुरसि विरसं शल्यमविशत् ॥ ३८ ॥

इति श्रीगूर्जरेश्वरमहामात्यश्रीवसन्तपालविरचिते नरनारायणानन्दनाम्नि
महाकाव्ये विवाहवर्णनो नाम पञ्चदशः सर्गः ॥

भवति हि विभवो भवः परेषां तव विभवोऽभिनवस्तु वस्तुपाल ।
इह महिममहोयशः प्रसूते यदयममुत्र परत्र पुण्यलक्ष्मीम् ॥ १५ ॥

## षोडशः सर्गः

शोभाभिभूतपुरुहूतपुरं पुरन्ध्रीलावण्यलोभितजगन्नगरं गरीयः ।
धाम श्रियोऽणहिलपाटकनाम कामलीलामयं जगति गूर्जरभूविभूषा ॥ १ ॥
वाग्देवतां यदि जना जनतामिवैतामानन्दिनः प्रतिदिनं हृदि नन्दयन्ति ।
यस्मिन्निमान्मदनतुल्यरुचस्तथापि निर्मत्सरा त्यजति नो सुतवत्सला श्रीः ॥
प्राग्वाटगोत्रतिलकः किल कश्चिदत्र श्रीचण्डपः स्फुटमखण्डपदप्रतिष्ठः ।
विस्फूर्जितान्यधित गूर्जरराजराज्यराजीवजीवनरविः सचिवावतंसः ॥ ३ ॥
कृष्णीकृतारिवदना सुमनोमनांसि रागास्पदं विदधती यदलक्ष्यरूपा ।
आनन्दमर्दितविचारमदैर्यदीयकीर्त्तिर्मुधा जितसुधा बुबुधे बुधेन्द्रैः ॥ ४ ॥
चण्डप्रसाद इति सादितविश्वदोस्थ्यस्तन्नन्दनः स्वकुलनन्दनकल्पशाखी ।
मुक्तामयप्रसवसञ्चयचारुचञ्चत्कीर्त्तिप्रभासुरभिताम्बरभूर्बभूव ॥ ५ ॥

शास्त्रार्थवारिभरहारिहृदालवालसंरोपिना मतिलना वितता नितान्तम् ।
यस्य प्रकाशितरविग्रहतापवद्भिश्छायार्थिभिर्नृपकुलैः फलदा सिषेवे ॥ ६ ॥
पुण्यस्य पापपटलीजयिनो जयश्रीरासीत्तदीयदयिना नयभूर्जयश्रीः ।
यस्या मनोदयितभक्तिसुरस्रवन्ती स्नानोज्ज्वलां जनयति स्म जिनेन्द्रसेवाम् ७
बिम्बोष्ठसम्पुटविपाटनया कदाचिदेषा स्मितं जितसुधाविभवं व्यधत्त ।
श्वेतद्युतिः कलुषतां तदयं हृदन्तः केनापरेण परिभूततनुस्तनोति ॥ ८ ॥
श्रीरङ्गभूर्भृशमभूदनयोर्नयाढ्यश्रीरङ्गभूर्जगति शूर इति प्रतीतः ।
अस्वप्नतां सुरगुरुः सह शिष्यवर्गैर्धत्ते स्म यन्मतिजितश्चिरचिन्तयेव ॥ ९ ॥
चूडामणीकृतजिनाङ्घ्रिनखप्रपञ्चः कर्णस्फुरद्गुरुसुवर्णविभूषणश्रीः ।
सद्वर्त्मनि प्रचलदुर्मदमोहचौरः दुःसञ्चरेपि विललास य एव शूरः ॥ १० ॥
हृत्वापि कान्तिलवमेव यदीयकीर्त्तेर्दिव्यं सृजन्निव जगत्यपवादभीतः ।
इन्दुः सुधावपुरपि प्रभुरौषधीनामप्येष सर्पनिभलक्ष्मधृतौ न शुद्धः ॥ ११ ॥
नामाभिधस्तदनुजः सुजनाननाब्जसूर्योऽभवद्विबुधसिन्धुविशुद्धबुद्धिः ।
यन्मानसेऽद्भुतरसे विललास वार्द्धिक्षिप्तौर्वतापविधुरेव सरस्वतीयम् ॥ १२ ॥
क्रीडाकथासु सदसि द्युसदां सदैव मौलिं विकम्प्य किल सोऽपि गुरुः सुराणाम् ।
बुद्धिवैभवभरस्य विचारितस्य नीराजनान्यकृत चञ्चलचूलरत्नैः ॥ १३ ॥
वः परं जिनवरो हरिभद्रसूरिः सत्यं गुरुः परिवृढः खलु सिद्धराजः ।
ोमाननेन नियतं नियमत्रयेण कीर्त्तिं व्यधात्त्रिपथगामिव यः पवित्राम् ॥१४॥
स्फूर्जं गूर्जरधराधवसिद्धराजराजत्सभाजनसभाजनभाजनस्य ।
मन्त्रिमन्त्रितदवानलविह्वलायां श्रीखण्डमण्डननिभा भुवि यस्य कीर्त्तिः ॥१५॥
ेन्पराध्यंगणिते सति यद्गुणानामेकैकबिन्दुरचनामुकुलैतवेन ।
लेन कति नो खटिनीर्दुभित्तौ धाता व्यधादथ विधास्यति कीर्त्तिशेषाः १६
। चेद्यशांसि बलिकर्णदधीचिमुख्या दानोत्सवैरविरलानि भुवि व्यधास्यन् ।
कैरदास्यत विलासमराललाललक्ष्मीर्यदीयघनदानयशोनदीषु ॥ १७ ॥
ोवाससद्मकरपद्मगदीपकल्पां व्यापारिणः कति न बिभ्रति हेममुद्राम् ।
ज्वालयन्ति जगदप्यनयैव केऽपि येन व्यमोचि तु समस्तमिदं तमस्तः ॥१८॥
जगत्त्रितयविस्मयनीयनीतेः सीतेति रामचरितस्य बभूव तस्य ।
लोचनं स्थिरतरं दयिताननेन्दौ दूरेण काञ्चनमृगश्रियमन्वगच्छत् ॥ १९ ॥
ादसौ हसतु शीतकरोऽपि भासा भृङ्गीरुतैरपि च हुङ्कुरुतां सरोजम् ।
ावलम्बितशिरोऽम्बरडम्बरेण यस्या मुखं जगति न प्रकटं यदासीत् ॥ २० ॥

तत्सम्भवस्त्रिभुवनाभरणं बभार शुभ्रं यशोभरमनश्वरमश्वराजः ।
मुक्त्वा कलङ्ककलितं ललितं हिमांशुं हर्षादलाभि सकलाभिरयं कलाभिः॥२१॥
यं मातृभक्तिशुचिमेव यशश्छलेन संसेव्य जातसुकृतो रजनीभुजङ्गः ।
आसीज्जगत्त्रितयविस्तृतवैभवश्च साक्षात्कलङ्करहितश्च सदोदितश्च ॥ २२ ॥
हुत्वा सदध्वरचितेषु तमांसि तीर्थयात्रोत्सवेषु खलु सप्तसु पावकेषु ।
यः सप्तपूर्वपुरुषैकमुदे यशोऽम्भःपूर्त्तानि सप्त भुवनानि कृती प्रतेने ॥ २३ ॥
संस्तूयमानचरितः परितः प्रबुद्धैः सत्यव्रते सुकृतसूनुरिवान्वहं यः ।
लज्जामसज्जयत चापगुरुद्विजेन्द्रद्रोणक्षयक्षणतदुक्तिविचारणेन ॥ २४ ॥
तस्य प्रिया प्रणयपात्रममात्रशीललीलायितं बत बभार कुमारदेवी ।
आलीयत प्रतिपदं जिनपादपद्मे चित्तेशवक्त्रकमले च यदीयदृष्टिः ॥ २५ ॥
यस्या मुखे जिनगुणग्रहणप्ररोहत्प्रीत्या शिरः प्रतिकलं परिकम्पयन्त्याः ।
हित्वाऽम्बुजं च रजनीरमणं च लोला दोलाकुतूहलरसं समसेवत श्रीः ॥२६॥
सूनुस्तयोरजनि नीरजनिर्मलास्यः श्रीलास्यभूः स्मरकलः किल लूणिगाख्यः ।
बाल्येऽपि यस्य चरितं विरराज वृद्धसंवादकं क्रमनिराकृतपल्लवस्य ॥ २७ ॥
यस्याननं द्विजवियुक्तमपि द्विजेन्द्रसान्द्रप्रभाभरमभान्नवशैशवस्य ।
अङ्गं च केशलवमुक्तमपि व्यराजत्तस्य प्रवालरुचिराधरपाणिपादम् ॥ २८ ॥
सत्याभिधस्तदनुजो मनुजावनंसरत्नं बभूव विदितो भुवि मल्लदेवः ।
यस्याग्रतः प्रतिकलं गतिविभ्रमेण विभ्राजते स्म न महानपि हस्तिमल्लः ॥२९॥
और्वाग्निनापततनः मततं पयोधौ पातालसीम्नि फणिफूत्कृतिदावदाहः ।
चण्डेव चण्डकरघर्मघटेति मत्त्वा यस्योज्ज्वलानि वचनानि सुधा सिषेवे॥३०॥
तस्यानुजः पितृपदाम्बुजचञ्चरीकः श्रीमातृभक्तिसरसीरसकेलिहंसः ।
साक्षाज्जिनाधिपतिधर्मनृपाङ्गरक्षो जागर्त्ति नर्तितमना मुदि वस्तुपालः ॥ ३१ ॥
नागेन्द्रगच्छमुकुटामरचन्द्रसूरिपादाब्जभृङ्गहरिभद्रमुनीन्द्रशिष्यात् ।
व्याख्यावचो विजयसेनगुरोः सुधाभमास्वाद्य धर्मपथि सत्पथिकोऽभवद्यः ३२॥
कुर्वन्मुहुर्विमलरैवतकादितीर्थयात्रां स्वकायपितृपुण्यकृते मुदा यः ।
सद्दृष्टिसङ्घपदरेणुभरेण चित्रं सद्दर्शनं जगति निर्मलयाम्बभूव ॥ ३३ ॥
धर्मौचितीं रुचितकामगवीं निषेव्य दुग्धप्रपास्त्रिजगतोऽपि वितत्य कीर्त्तीः ।
यो मातृदुग्धरसपानमहोत्सवानामानृण्यमात्मनि कथञ्चन नैव मेने ॥ ३४ ॥
भास्वत्प्रभावमधुराय निरन्तरायधर्मोत्सवव्यतिकराय निरन्तराय ।
यो गूर्जरावनिशिरोमणिर्भीमभूपमन्त्रीन्द्रतापरवशत्वमपि प्रपेदे ॥ ३५ ॥

यः कामवृत्तिरनुजेन निजेन तेजःपालेन पूर्णनृपकार्यपरम्परेण ।
सद्धर्मकर्मरस एव मनो मनोज्ञविद्वद्विनोदपयसि स्नपयाम्बभूव ॥ ३६ ॥
यः स्वीयमातृपितृबन्धुकलत्रपुत्रमित्रादिपुण्यजनये जनयाञ्चकार ।
सद्दर्शनव्रजविकाशकृते च धर्मस्थानावलीवलयिनीमवनीमशेषाम् ॥ ३७ ॥
कीर्त्या सौरभसारसान्द्रसुमनःसन्दोहसन्दोहकृत्-
कान्त्या पाति वसन्तमन्वहममाविल्यर्पितार्थक्रमम् ।
ख्यातं प्राप वसन्तपाल इति यो नामाङ्कितीयं मुदा
विद्वद्भिः परिकल्पितं हरिहरश्रीसोमशर्मादिभिः ॥ ३८ ॥
श्रीशत्रुञ्जयशैलशेखरमणेः श्रीनाभिसूनुप्रभोः
पीत्वा वक्त्रसुधांशुदीधितिसुधामाकण्ठमुत्कण्ठया ।
व्यातन्वन्कवितां नितान्तमुदितः सद्यस्तदुद्गारवत्
तस्यैवादिजिनेश्वरस्य जनयामास [1]स्तवं यो नवम् ॥ ३९ ॥
नरनारायणानन्दो नाम कन्दो मुदामिदम् ।
तेने तेन महाकाव्यं वाग्देवीधर्मसूनुना ॥ ४० ॥
उद्गास्वद्भिश्वविद्यालयमयमनमः कोविदेन्द्रा वितन्द्रा
मन्त्री बद्धाञ्जलिर्वो विनयनतशिरा याचते वस्तुपालः ।
अल्पप्रज्ञाप्रबोधादपि सपदि मया कल्पितेऽस्मिन्प्रबन्धे
भूयो भूयोऽपि यूयं जनयत नयनक्षेपतो दोषमोषम् ॥ ४१ ॥

इति श्रीगूर्जरेश्वरमहामात्यश्रीवसन्तपालविरचिते नरनारायणानन्दनाम्नि
महाकाव्ये प्रशस्तिप्रपञ्चो नाम षोडशः सर्गः ॥

अचिन्त्यदातारमजातशत्रुं श्रीवस्तुपालं कति नाश्रयन्ति ।
चिन्तामणिः सोऽपि युधिष्ठिरश्च नान्वर्थसामर्थ्यपदं यदग्रे ॥ १७ ॥
शङ्के शारदपर्वगर्वितशशिज्योत्स्नासपत्नं तव
त्रैलोक्ये गुणजालकं विलसति श्रीवस्तुपालाद्भुतम् ।
यत्तादृग्दृढपाशवैशसकृताशङ्काभिशङ्का स्फुटं
नैवान्यस्य भवन्ति कीर्त्तिवरलाः खेलासु हेलास्पदम् ॥ १८ ॥

## समाप्तं नरनारायणानन्दमहाकाव्यम् ।

1 This will be found on p. 63.

# APPENDIX I.

श्रीगूर्जरेश्वरमहामात्यवस्तुपालकृतं

## श्रीआदीश्वरमनोरथमयं स्तोत्रम्

लब्ध्वा मानुषजन्मजातिसुकुलप्रष्ठां प्रतिष्ठामिमां
धृत्वा धर्मधुरीणतामधिगतः सङ्घाधिपत्यश्रियम् ।
तीर्थेशाग्रिम वस्तुपालसचिवो विश्वाग्रजाग्रत्पदा-
रोहाय प्रगुणां मनोरथमयीं निःश्रेणिमाशिश्रियत् ॥ १ ॥
श्रीनाभेय मनोरथाः शतपथा मिथ्याभिमानाम्बुधेः
कल्लोला इव विस्फुरन्ति विषयग्राहग्रहव्यग्रिताः ।
हित्वा तानिति वस्तुपालसचिवः सद्धोधदुग्धोदधे-
र्भेजे वीचिसमानिमान् शमदमप्रव्यक्तमुक्ताफलान् ॥ २ ॥
प्रत्याशं प्रसरत्कषायविषयज्वालाकरालादितो
दूरीभूय भयङ्कराद्भवदवाद्व्यामोहधूमान्धितः ।
श्रीशत्रुञ्जयशैलपावनजिन त्वत्क्रचन्द्रातपो-
पास्तिध्वस्ततमाः शमामृतह्रदे दाहं कदाहं क्षिपे ॥ ३ ॥
एतस्मिन्भववारिधौ निरवधि क्रोधौर्ववह्नेश्च्युत-
स्त्रस्तो लोभतिमिङ्गिलस्य गिलनात्क्लेशाम्भसो निर्गतः ।
स्रस्तस्तात कदा कदाग्रहमहाग्राहाच्च शत्रुञ्जय-
द्वीपं प्राप्य भजेय जयविजयप्रीतः परां निर्वृतिम् ॥ ४ ॥
संसारव्यवहारतो रतिमतिव्यावर्त्यकर्त्तव्यता-
वार्त्तामप्यपहाय चिन्मयतया त्रैलोक्यमालोकयन् ।
श्रीशत्रुञ्जयशैलगह्वरगुहामध्ये निबद्धस्थितिः
श्रीनाभेय कदा लभेय गलितज्ञेयाभिमानं मनः ॥ ५ ॥
स्वामिन्मृत्युहरेरहं हरिणवन्नष्टोऽतिकष्टायुध-
व्याधिव्याधशतैर्वृतः श्रितभवारण्योऽशरण्यो भ्रमन् ।

नाभेय त्वमनाकुलः कुलपतिर्यत्रासि तस्मिँल्लभे
श्रीशत्रुञ्जयशैलनामनि कदा पुण्याश्रमे विश्रमम् ॥ ६ ॥
श्रीगर्वोष्मभिरौष्मलेषु धनिनामीर्ष्यानलज्वालया
जिह्वालेषु मृगीदृशामनुशयाङ्कमायितेषु द्विषाम् ।
वक्त्रेषु ग्लपितामिमां त्रिजगतीनिस्तन्द्रचन्द्रोदये
देव श्रीविमलाद्रिकेतन कदा दास्ये त्वदास्ये दृशम् ॥ ७ ॥
क्रोधेन ज्वलितो हतोऽहमिषुभिः पञ्चेषुणा पञ्चभिः
बद्धो मोहमहाद्विपा च विषयग्रामं प्रकामं श्रितः ।
तद्दुस्तान्तरवैरिवीर भुवनस्वामिन् सनाथे त्वया
दुर्गे श्रीविमलाद्रिनामनि सुखं स्थातास्मि सुस्थः कदा ॥ ८ ॥
आस्यं कस्य न वीक्षितं क न कृता सेवा न के वा स्तुता-
स्तृष्णापूरपराहतेन विहिता केषां च नाभ्यर्थना ।
तत्रान्तर्विमलाद्रिनन्दनवनाकल्पैककल्पद्रुमं
त्वामासाद्य कदा कदर्थनमिदं भूयोऽपि नाहं सहे ॥ ९ ॥
संसारे सुखहेतुवस्तुविपर्यैस्तत्सङ्गिनैः सङ्गतै-
र्दत्ता देव त्वदन्यदेव तदियं वाञ्छा ममोन्मेकिनी ।
श्रेयोवैभव नाभिसम्भव भवाकूपारपारङ्गम
श्रीशत्रुञ्जयमण्डनेन भवता भावी कदा सङ्गमः ॥ १० ॥
एताः शमामृतरसेन हृदालवाले संवर्द्धिताः पृथुमनोरथवल्लयो मे ।
विश्वैकमित्र भगवन् भवतः प्रमादाल्लोकोत्तरैः फलभरैः सफलीभवन्तु ॥ ११ ॥
धर्मध्यानमना मनोरथमयं स्तोत्रं युगादिप्रभो-
श्चक्रे गूर्जरचक्रवर्त्तिसचिवः श्रीवस्तुपालः कविः ।
प्रातः प्रातरधीयमानमनघां यच्चित्तवृत्तिं सता-
माधत्ते विभुतां च ताण्डवयति श्रेयःश्रियं पुष्यति ॥ १२ ॥

इति श्रीआदीश्वरमनोरथमयं स्तोत्रम् ।

# APPENDIX II

# श्रीवस्तुपालसूक्तयः

[1]मुधा मधु मुधा सीधु मुधा सोऽपि सुधारसः ।
आस्वादितं मनोहारि यदि हारिहरं वचः ॥

[2]आयान्ति यान्ति च परे ऋतवः क्रमेण सञ्जातमत्र ऋतुयुग्ममगत्वरं तु ।
वीरेण वीरधवलेन विना जनानां वर्षा विलोचनयुगे हृदये निदाघः ॥

[3]यशोवीर यशोमुक्ताराशेरिन्दुरसौ शिखा ।
तद्रक्षणाय रक्षायाः श्रीकारो लाञ्छनच्छलात् ॥

बिन्दवः श्रीयशोवीर सध्ये शून्या निरर्थकाः
सङ्ख्यावन्तो निगद्यन्ते त्वयैकेन पुरस्कृताः ॥

यशोवीर लिखत्याख्यां यावच्चन्द्रे विधिस्तव ।
न भाति भुवने तावदाद्यमप्यक्षरद्वयम् ॥

सन्तः समन्तादपि तावकीनं यशो यशोवीर बत स्तुवन्ति ।
जाने जगत्सज्जन लज्जमानः प्रविश्य कोणे त्वमतः स्थितोऽसि ॥

प्रकाश्यते सतां साक्षाद् यशोवीरेण मन्त्रिणा ।
मुखेन्दुज्योतिषा ब्राह्मी करे श्रीः स्वर्णमुद्रया ॥

[4]अस्थिरेण वपुषा स्थिरमाशं वीतरागपदमर्चयतो मे ।
किं वृथा सनसि बिभ्रति खेदं धर्मकल्पतरवो गुरवोऽमी ॥

अद्य मे फलवती पितुराशा मातुराशिषि शिखाङ्कुरिताऽद्य ।
यद्युगादिजिनयात्रिकलोकं पूजयाम्यहमशेषमखिन्नः ॥

एवंविधस्तु संयोगः सुकृतैरेव लभ्यते ।
नहि चिन्तामणिः प्रायो निष्पुण्यस्य गृहे वसेत् ॥

[5]कल्पद्रुमस्तरुरसौ तरवस्तथान्ये चिन्तामणिर्मणिरसौ मणयस्तथान्ये ।
धिग्जातिमेव ददृशे बत यत्र नेमिः श्रीरैवतेशदिवसो दिवसास्तथान्ये ॥

अभङ्गवैराग्यतरङ्गपूर्णे हृदि त्वदीये यदुवंशरत्न ।
कथं कृशाङ्गयोऽपि हि मान्तु हन्त यस्मादनङ्गोऽपि पदं न लेभे ॥

---

१ हरिहरकाव्यप्रशंसा । २ वीरधवलस्वर्गमने वस्तुपालस्य विलाप. । ३ चाहमाननरेन्द्रोदयसिंह-मन्त्रियशोवीरोपश्लोकनपदानि । ४ नागपुरीयपूनडीयसङ्घार्चनसमये । ५ तीर्थङ्करस्तुत्यादिपदानि ।

त्वत्प्रासादकृते नीडे वसन्शृण्वन्गुणांस्तव ।
सद्बुद्दर्शनतुष्टात्मा भूयासं विहगोऽप्यहम् ॥
यद्दाये द्यूतकारस्य यत्प्रियायां वियोगिनः ।
यद्राधावेधिनो लक्ष्ये तद्ध्यानं मेऽस्तु ते मते ॥
अधीता न कला काचिन्न च किञ्चित्कृतं तपः ।
दत्तं न किञ्चित्पात्रेभ्यः गतं च मधुरं वयः ॥
आयुर्जीवितवित्तेषु स्मृतिशेषेषु या मतिः ।
सैव मे जायते पूर्वं न दूरं परमं पदम् ॥
आरोहन्ती शिरः स्वान्तादौन्नत्यं तनुते जरा ।
शिरसः स्वान्तमायान्ती दिशते नवतां पुनः ॥
वञ्चयित्वा जनानेतान् सुकृतं गृह्यते श्रिया ।
तत्तनो गृह्यते येन स तु धूर्तधुरन्धरः ॥
नृपव्यापारपापेभ्यः सुकृतं स्वीकृतं न यैः ।
तान्धूलिधावकेभ्योऽपि मन्येऽधमतरान्नरान ॥
न कृतं सुकृतं किञ्चित् सतां संस्मरणोचितम् ।
मनोरथैकसाराणामेवमेव गतं वयः ॥
यन्मयोपार्जितं पुण्यं जिनशासनसेवया ।
जिनशासनसेवैव तेन मेऽस्तु भवे भवे ॥
या रागिणि विरागिण्यः स्त्रियस्ताः कामयेत कः
तामहं कामये मुक्तिं या विरागिणि रागिणी ॥
शास्त्राभ्यासो जिनपदनतिः सङ्गतिः सर्वदार्यैः
सद्वृत्तानां गुणगणकथनं दोषवादे च मौनम् ।
सर्वस्यापि प्रियहितवचो भावना चात्मतत्त्वे
सम्पद्यन्तां मम भवभवे यावदाप्तोऽपवर्गः ॥

१ श्रीनाभेयध्यानावसरे । २ पलितं दृष्ट्वा वस्तुपालस्योक्तयः । ३ देहावसानसमये । सुभाषितावल्यां नामोल्लेखं विना पादव्यत्यासेनोदाहृतमिदम् ।

# APPENDIX III

# श्रीवस्तुपालकीर्त्तिदानप्रबन्धाः

( उपदेशतरङ्गिणीतः )

श्रीवस्तुपालः प्रतिवर्षं वारत्रयं सर्वचतुर्विधसङ्घपूजां करोति स्म। एकदा सङ्घार्चायां जायमानायां एको दरिद्रो द्विजः प्राह–देव! कल्पद्रुमावतार इव सर्वलोकवाञ्छितं ददानो दृश्यसे, एकवेलं ममापि सम्मुखमवलोकय, यथा दारिद्र्याय जलाञ्जलिं ददामि। तदा मन्त्रिणोक्तम्–रे! किमप्युद्धरितवस्त्रमस्ति?, एका वस्त्रबन्धनस्थूलपट्यस्ति, देहि। सा द्विजस्यार्पिता। तेन विलोक्योक्तम्–

क्वचित् सूत्रं क्वचित् तूलं कार्पासमास्थि क्वचित् क्वचित्।
देव! त्वदरिनारीणां कुटीतुल्या पटी मम॥

मन्त्रिणोक्तम्–पुनर्वद, ससदशवारमुक्तम्। १७ शतानि द्रम्माणां समर्पितानि। एकदा यात्रारम्भे चन्दनार्चागतमन्त्रिणा सभायां किञ्चिन्निद्रायमाणनरचन्द्राचार्यो वादितः प्राह–नाहं निद्रायमाणः, किन्तु नेत्रे निमील्य लक्ष्मीनारायणयोः समुद्रमध्यस्थयोः परस्परालापं शृण्वन्नस्मि।

यथा–लक्ष्मि! प्रेयसि! केयमास्यशिनिता वैकुण्ठ! कुण्ठोऽसि किं
नो जानासि पितुर्विनाशमसमं सङ्घोत्थितैः पांसुभिः?।
मा भीर्भीरु! गभीर एव भविताऽम्भोधिश्चिरं नन्दतात्
सङ्घेशो ललितापतिर्जितपतेः स्नात्राम्बुकुल्यां सृजन्॥

बालचन्द्रक्षुल्लकेन श्रीवस्तुपालो वर्णितः–

गौरी रागवती त्वयि त्वयि वृषो बद्धादरस्त्वं पुन-
र्भूत्या त्वं च समुल्लसद्गुणगणः किं वा बहु ब्रूमहे।
श्रीमन्त्रीश्वर! नूनमीश्वरकलायुक्तस्य ते युज्यते
बालेन्दुं चिरमुच्चकै रचयितुं त्वत्तोऽपरः कः क्षमः॥

तदनु मन्त्रिणा भट्टारकपादोपवेशनं कारितं बालचन्द्रस्य।

एकदा अमरचन्द्रमुनौ पर्षदि तत्कालकृतनव्यश्लोकैर्व्याख्यानं कुर्वति द्विपदी प्रोक्ता–

अस्मिन्नसारे संसारे सारं सारङ्गलोचना ।

वन्दनार्थमागच्छता द्वारस्थेन मन्त्रिणा श्रुता । अहो ! रागी स्त्रीकथाकृन्मुनिः, इति ध्यात्वा न वन्दितः । ज्ञातमन्त्रिचित्ताभिप्रायेणामरचन्द्रेणोक्तम्-

अस्मिन्नसारे संसारे सारं सारङ्गलोचना ।
यत्कुक्षिप्रभवा एते वस्तुपाल ! भवादृशाः ॥

तुष्टेन पादोपवेशनं कारितम् ।

श्रीशत्रुञ्जयतीर्थे संघसमक्षं श्रीवस्तुपालमन्त्रिणि आरात्रिके क्रियमाणेऽर्थिनां मन्त्रिमध्ये झम्पानं दृष्ट्वा सोमेश्वरकविः प्राह—

इच्छासिद्धिसमुन्नते सुरगणे कल्पद्रुमैः स्थीयते
पाताले पवमानभोजनजने कष्टं प्रणष्टो बलिः ।
नीरागानगमन् मुनीन् सुरभयश्चिन्तामणिः क्वाप्यगात्
तस्मादर्थिकदर्थनां विषहतां श्रीवस्तुपालः क्षितौ ॥

सोमेश्वरस्य सहस्रं ददौ । सन्तुष्टेन सोमेश्वरेण पुनरभाणि—

के निधाय वसुधातले धनं वस्तुपाल न यमालयं गताः ।
त्वं तु नन्दसि निवेशयन्निदं दिक्षु धावति जने क्षुधावति ॥

पुनरपि सहस्रं ददौ ।

तथाऽरिसिंहकविः-श्रीवासाम्बुजमाननं परिणतं पञ्चाङ्गुलीच्छद्मतो
जग्मुर्दक्षिणपक्षशाखमयतां पञ्चापि देवद्रुमाः ।
वाञ्छापूरणकारणं प्रणयिनां जिह्वैव चिन्तामणि-
र्जाता यस्य किमस्य शस्यमपरं श्रीवस्तुपालस्य तत् ॥

द्विसहस्री दत्ता ।

एकदा तुष्टेन श्रीवीरधवलेन मन्त्रिणे दशलक्षी प्रसादे दत्ता । सा तु तेन गृहादर्वागेव दत्ता, तदा कश्चित्कविः—

श्रीमन्ति दृष्ट्वा द्विजराजमेकं पद्मानि सङ्कोचमवाप्नुवन्ति ।
समागतेऽपि द्विजराजलक्षे सदा विकासी तव पाणिपद्मः ॥

इति स्तूयमानो लज्जयाऽधो विलोकयति स्म । तदा नानाख्यकविः प्राह-

एकस्त्वं भुवनोपकारक इति श्रुत्वा सतां जल्पितं
लज्जानम्रशिरा धरातलमिदं यद्वीक्षसे वेद्मि तत् ।
वाग्देवीवदनारविन्दतिलकश्रीवस्तुपाल ! ध्रुवं
पातलाद्बलिमुद्दिधीर्षुरसकृन्मार्गं भवान्मार्गति ॥

सुवर्णजिह्वा दत्ता। कर्णस्त्वचं शिबिर्मांसं, जीवं जीमूतवाहनः, ददौ दधीचिरस्थीनि; पण्डितत्रयवाक्यमिदं।

जयन्तदेवेन समस्यापादं चक्रे—वस्तुपालः पुनर्वसु। सहस्रचतुष्टयं प्रदत्तम्।

एकदा सोमेश्वरो वस्तुपालधवलगृहे समागतः, वर्यासनदानेऽपि नोपविशति स्म। मन्त्रिणा कारणं पृष्टः प्राह—

अन्नदानैः पयः पानैर्धर्मस्थानैश्च भूतलम्।
यशसा वस्तुपालेन रुद्धमाकाशमण्डलम्॥

इति स्थानाभावात् नोपविश्यत इत्युक्ते नवसहस्री प्रदत्ता।

एकस्यां सङ्घार्चायां विजयसेनसूरिभिरुक्तम्—नन्दनोद्यानपालको बुम्बां पातयन्निन्द्रसभायामागत्य वक्ति।

यथा—देव! स्वर्नाथ! कष्टं ननु क इह भवान् नन्दनोद्यानपालः
खेदस्तत्कोऽस्य केनाप्यहह! हृत इतः काननात् कल्पवृक्षः।

इन्द्रप्रतिवचो यथा—

हुं मा वादीस्तदेतत् किमपि करुणया मानवानां मयैव
प्रीत्याऽऽदिष्टोऽयमुर्व्यास्तिलकयति तलं वस्तुपालच्छलेन॥

रोहणाचलं प्रति कस्यापि प्रश्नः—

हंहो रोहण! रोहति त्वयि मुहुः किं पीनतेयं सदा?

रोहणप्रतिवचो यथा शृणु—

भ्रातः! सम्प्रति वस्तुपालसचिवत्यागैर्जगत्प्रीयते।
तेनाऽस्मैव ममार्थिकुट्टनकथा प्रीतिर्दरीकिंनरी-
गीतैस्तस्य यशोमृतैश्च तदियं मेदस्विता मेऽधिका॥

एकदा देवकपत्तनतः सोमेश्वरपूजाकारकभट्टाः समागताः।
मन्त्रिणा पृष्टाः—वर्या पूजा क्रियमाणाऽस्ति न वा?। ते प्राहुः—

नादत्ते भसितं सितं सचिव ते कर्पूरपूरं स्मरन्
कौपीने न च तुष्यति प्रभुरसौ शंसन्दुकूलानि ते।
दिग्धो दुग्धभरैर्जलेषु विमुखः श्रीवस्तुपाल त्वया
कर्पूरागुरुपूरितः पशुपतिर्नो गुग्गलं जिघ्रति॥

अस्य काव्यस्य कारकाणां भट्टानां दशसाहस्री प्रदत्ता।
दानमण्डपिकायां निरर्गलं दानं ददानं वस्तुपालं कवयः स्तुवन्ति
यथा—ये पापप्रवणाः स्वभावकृपणाः स्वामिप्रसादोल्बणाः

तेऽपि द्रव्यकणाय मर्त्यभषणा जिह्वे भवत्या स्तुताः
तस्मात्तत्तदघापघातविधये बद्धादरा सम्प्रति
श्रेयः स्थानविधानधिक्कृतकलिं श्रीवस्तुपालं स्तुहि ॥

सूरो रणेषु चरणप्रणतेषु सोमः वक्रोऽतिवक्रचरितेषु बुधोऽर्थबोधे ।
नीतौ गुरुः कविजने कविरक्रियासु मन्दोऽपि च ग्रहमयो न हि वस्तुपालः

श्रीभोजवदनाम्भोजवियोगविधुरं मनः ।
श्रीवस्तुपालवक्त्रेन्दौ विनोदयति भारती ॥

सर्वेषां सहस्रदानम् ।

पीयूषादपि पेशलाः शशधरज्योत्स्नाकलापादपि
स्वच्छा नूतनचूतमञ्जरिभरादप्युल्लसत्सौरभाः ।
वाग्देवीमुखसामसूक्तविशदोद्गारादपि प्राञ्जलाः
केषां न प्रथयन्ति चेतसि मुदः श्रीवस्तुपालोक्तयः ? ॥

श्रीवस्तुपाल ! तव भालतले जिनाज्ञा
वाणी मुखे हृदि कृपा करपल्लवे श्रीः ।
देहे द्युतिर्विलसतीति रुषेव कीर्तिः
पैतामहं सपदि धाम जगाम नाम ॥

अपरस्तु—अतिस्मरन्तीमपि गेहगर्भात् कीर्तिं परेषामसतीं वदन्ति ।
स्वैरं भ्रमन्तीमपि वस्तुपाल ! त्वत्कीर्त्तिमाहुः कवयः सतीं तु ॥

इतरस्तु—सेयं समुद्भवमना तव दानकीर्ति-
पूरोत्तरीयपिहितावयवा समन्तात् ।
अत्रापि कर्णविकलेति न लक्ष्यते यत्
तन्नाद्भुतं सचिवपुङ्गव वस्तुपाल ! ॥

कश्चित्तु—क्रमेण मन्दीकृतकर्णशक्तिः प्रकाशयन्तीव वलिस्वभावम् ।
कैर्नानुभूता सशिरःप्रकम्पं जरेव दत्तिस्तव वस्तुपाल ॥

तेभ्यः कविभ्यः सहस्रं ददौ ।

हंसैर्लब्धप्रशंसैस्तरलितकमलप्रस्तरङ्गैस्तरङ्गैः
नीरैरन्तर्गभीरैश्चटुलबककुलग्रासलीनैश्च मीनैः ।
पालीरूढद्रुमालीतलसुखशयितस्त्रीप्रणीतैश्च गीतै-
र्भाति प्रक्रीडदाऽऽतिस्तव सचिव चलच्चक्रवाकस्तटाकः ॥

ललितासरोवरवर्णने सोमेश्वरस्य षोडशसहस्रप्रदानं सर्वाऽनुप्रासानुमानेन ।

श्रीशत्रुञ्जयोपरि अनुपमदेव्या अनुपमसरः कारितम्। तस्य भरितमहोत्सवे क्रियमाणे चारणेनोक्तम्।

भाऊ भरहिं काई सेत्तुंजि सर न कराविउं।
जाणूं हुं इणइ ठामि आगइ अणुपमडी कीउ॥

एकविंशतिः शतानि द्रम्माणां दत्तानि। तथा स्वसंकीर्त्तनगुणकुलपूर्वजावदातप्रतिपादककीर्त्तिकौमुदीसुकृतसङ्कीर्तनकाव्यकृत्सोमेश्वरारिसिंहयोर्ग्रामग्रामाश्वकनकदुकूलादिदानं यावज्जीवाहं दत्तम्। इत्यादिश्रीवस्तुपालकीर्त्तिदानप्रबन्धाः शतशो यथा श्रुताः स्वयं वाच्याः ८४, २४, ७२, प्रबन्धेभ्यः।

- - - - - - -

II

( प्रबन्धचिन्तामणितः )

अथान्यस्मिन्नवसरे श्रीसोमेश्वरस्य कवेः काव्यम्।

हंसैर्लब्धप्रशंसैस्तरलितकमलव्रत्तरैस्तरङ्गै-
र्नीरैरन्तर्गभीरैश्चटुलबककुलग्रामलीनैश्च मीनैः।
पालीरूढद्रुमालीतलसुखशयितस्त्रीप्रणीतैश्च गीतै-
र्भाति प्रक्रीडदर्मिस्तव सचिव सरश्चक्रवाकस्तटाकः॥

श्रीमन्त्रिणा षोडशसहस्रद्रम्माणां दत्तिः प्रसादीकृता।

क्वचिच्चिन्तातुरस्य मन्त्रिणो भूमिं मृगयमागत्य समागतः सोमेश्वरदेवः समयोचितमिदमपाठीत्। तद्यथा—

एकस्त्वं भुवनोपकारक इति श्रुत्वा सतां जल्पितं
लज्जानम्रशिराः स्थिरातलपदं यद्वीक्षसे वेद्मि तत्।
वाग्देवीवदनारविन्दतिलक श्रीवस्तुपाल! स्वयं
पातालाद्बलिमुद्दिधीर्षुरसकृन्मार्गं भवान्मार्गति॥

मन्त्रिणास्य काव्यस्य पारितोषिकेऽष्टौ सहस्राणि दत्तानि॥ तथा

त्वचं कर्णः शिबिर्मांसं जीवं जीमूतवाहनः।
ददौ दधीचिरस्थीनि—

इति त्रिषु पदेषु पण्डितेष्वभिधीयमानेषु पण्डितजयदेवः समस्यापदमिव, वस्तुपालः पुनर्वसु, इत्युच्चरन् सहस्रचतुष्टयं लेभे।

तथा सूरीणां दर्शनप्रतिलाभनावसरे केनापि दुर्गतद्विजातिना याचनया तन्नियुक्तेभ्यः कृपया पटीमुपलभ्य मन्त्रिणं प्रति समयोचितमूचे—

क्वचित्तूलं क्वचित्सूत्रं कार्पासास्थि क्वचित्क्वचित् ।
देव त्वदरिनारीणां कुटीतुल्या पटी मम ॥
तत्पारितोषिके मन्त्रिणा दत्तानि पञ्चदशशतानि ।
तथा बालचन्द्रनाम्ना पण्डितेन श्रीमन्त्रिणं प्रति—
गौरी रागवती त्वयि त्वयि वृषो बद्धादरस्त्वं युतो
भूत्या त्वं च लसद्गुणः शुभगणः किं वा बहु ब्रूमहे ।
श्रीमन्त्रीश्वर नूनमीश्वरकलायुक्तस्य ते युज्यते
बालेन्दुं चिरमुच्चकै रचयितुं त्वत्तोऽपरः कः प्रभुः ॥
इत्युक्ते तस्याचार्यपदस्थापनायां द्रम्मसहस्रं व्ययीकृतम् ।

## III

( जिनहर्षकृतवस्तुपालचरित्रतः )

अत्रान्तरे नरेन्द्रेषु शृण्वत्सु निखिलेष्वपि ।
वस्तुपालस्तुतिं कश्चिद्विपश्चिदिति निर्ममे ॥
खेलद्भिः खरदूषणास्तसुभगैः क्षीराब्धिबन्धोद्धुरै-
रुच्चैरावणनाशभासुरतरैरेभिर्यशोभिर्भृशम् ।
भूमिं भूषयति त्रयीननुकुलक्षोणीधवस्पर्द्धया
श्रीसोमान्वयसम्भवोऽपि सपदि श्रीवस्तुपालः कृती ॥
द्रम्माणां प्रददे तस्मै स लक्षं पारितोषिकम् ।
यतो रणाङ्गणे श्रेयो जयश्रीकारणं परम् ॥
तदा कवीश्वरः कश्चिद्वस्तुपालस्य मन्त्रिणः ।
नरेन्द्रादेशमासाद्य वास्तव्यां स्तुतिमब्रवीत् ॥
श्रीवस्तुपाल प्रतिपक्षकाल त्वया प्रपेदे पुरुषोत्तमत्वम् ।
नीरेऽपि वार्द्धेरकृतेऽपि मात्स्ये रूपे पराजीयत येन शङ्खः[1]
अपूर्वं तव पाण्डित्यं वस्तुपाल विराजते ।
येनैकशङ्खभङ्गेन विश्वं धवलितं त्वया ॥
मिलिते नव दलपूगे तस्मिन्शङ्खे च चूर्णतां याते ।
श्रीवस्तुपालमन्त्रिन् महीमुखे कोऽपि तव रङ्गः ॥

---

१ शङ्खयुद्धसमये । २ शङ्खं निर्जित्य धवलककागमने राजसंसदि ।

तावल्लीलाकलितसरित्तावदभ्रंलिहोर्मि-
स्तावत्तीव्रध्वनितमुखरस्तावदज्ञानमर्मा ।
तावत्प्रेङ्खत्कमठमकरव्यूहबन्धुः स सिन्धु-
र्लोपामुद्रासहचरकरक्रोडवर्ती न यावत् ।
दीनाराणां सहस्राणि तस्मै चत्वारि भूपतिः ।
श्रीमान् विश्राणयामास प्रीतः सचिवसंस्तवात् ॥
प्रीणयन्तमिति प्राणिश्रेणीर्विश्राणनैर्निजैः ।
कृपालवालं श्रीवस्तुपालं स्तौति स्म कश्चन ॥
" अचिन्त्यदातारमजातशत्रुं श्रीवस्तुपालं कति नाथयन्ति ।
चिन्तामणिः सोऽपि युधिष्ठिरश्च नान्वर्थसाम्यार्थपदं यदग्रे ॥
हृद्यः कस्यापि नायं प्रथयति न परप्रार्थनादैन्यमुच्चै-
स्तुच्छामिच्छां विधत्ते ननु हृदनया कोऽपि निष्पुण्यपण्यः ।
इत्थं कल्पद्रुमेऽस्मिन् व्यसनपरवशं लोकमालोक्य सृष्टः ।
स्पष्टं श्रीवस्तुपालः कथमपि विधिना नूतनः कल्पवृक्षः ॥"
ऋणार्त्तस्य कवेस्तस्य ऋणमोक्षं विधाय सः ।
आजन्म सकुटुम्बस्य योगक्षेममकारयत् ॥
अथावसरमासाद्य वृत्तिं सद्वृत्तशालिनौ ।
पूर्वं कृतोपकारेषु भट्टसोमेश्वरादिषु ॥
भूयो भूमिप्रदानेन वस्तुमण्डपिकादिषु ।
विशोपकविधानाच्च कृतज्ञौ कुरुतः स्म तौ ॥ युग्मम् ।
कविः सोमेश्वरः प्राह स्तुतिमेवं तयोस्ततः ।
पुपूषति न को वाचं कृतज्ञगुणकीर्त्तनात् ॥
" न गिरौ न च मातङ्गे न कूर्मे नैव सूकरे ।
वस्तुपालस्य धीरस्य पाणौ तिष्ठति मेदिनी ॥
सूत्रे वृत्तिः कृता पूर्वं दुर्गसिंहेन धीमता ।
विसूत्रे तु कृता वृत्तिस्तेजःपालेन मन्त्रिणा ॥ "
भट्टसोमेश्वरप्रायाः प्रसिद्धाः कविकुञ्जराः ।
चक्रुस्तत्रागता मन्त्रिसुतामगुणकीर्तनम् ॥

---

१ वस्तुपालनिर्मितसत्रागारमुद्दिश्येदम् । २ वस्तुपालस्य कृतज्ञता । ३ स्तम्भनकतीर्थयात्रायाम् ।

यथा—" श्रीवस्तुपाल तव भालतले जिनाज्ञा
वाणी मुखे हृदि कृपा करपङ्कजे श्रीः ।
देहे द्युतिर्विलसतीव रुषेव कीर्तिः
पैतामहं सपदि धाम जगाम नाम ॥
[1]अनिस्सरन्तीमपि गेहगर्भात्कीर्तिं परेषामसतीं वदन्ति ।
स्वैरं भ्रमन्तीमपि वस्तुपाल त्वत्कीर्तिमाहुः कवयः सतीं तु ॥
सेयं समुद्रवसना तव दानकीर्तिः पूरोत्तरीयपिहितावयवा समन्तात् ।
अद्यापि कर्णविकलेति न लक्ष्यते यत्तत्त्वद्भुतं सचिवपुङ्गव वस्तुपाल! ॥
क्रमेण मन्दीकृतकर्णशक्तिः प्रकाशयन्ती च बलिस्वभावम् ।
कैर्नानुभूता सशिरःप्रकम्पं जरेव कीर्तिस्तव वस्तुपाल ॥ "
प्रत्येकं द्रम्मलक्षाणि तेषामेव ददौ पुनः ।
भट्टगन्धर्वलोकानां सहस्राणि यथागुणम् ॥
एवं सहोदरौ प्रौढपुण्यकार्यैकतत्परौ ।
तन्तुष्टाव फलप्राप्त्यै कविः सोमेश्वरोऽनघः ॥
" पन्थानमेको न कदापि गच्छेदिति स्मृतिप्रोक्तमिव स्मरन्तौ ।
तौ भ्रातरौ संसृतिमोहवीरौ सम्भूय धर्माध्वनि सम्प्रवृत्तौ ॥
जनव्यामोहवल्लीयमिन्दिरा मन्दिरागता ।
मन्त्रिणा वस्तुपालेन कल्पवल्लीव निर्मिता ॥
श्लाघ्यः स एकः खलु वस्तुपालः सर्वोत्तमः सर्वगुणाकरश्च ।
यस्यार्थिनो वा शरणागता वा नाशाविनाशाद्विमुखा व्रजन्ति ॥
कुत्रापि नोपसर्गो वर्णविकारोऽथवा निपातो वा ।
तेजःपालेन कृताऽपूर्वा व्याकरणस्थितिर्लोके ॥ "
तस्मै तौ ददतुः प्रीतौ द्रम्मलक्षत्रयं क्षणात् ।
दक्षिणानां यतो लोके दानेयत्ता न विद्यते ॥
कियन्तो पञ्चसहस्री कियन्तो लक्षाश्च कोटिरपि कियन्ती ।
औदार्योन्नतमनसां रत्नमती वसुमती कियती ॥
[2]श्रीकर्णविक्रमदधीचिसभोजमुर्वीश्वरा भुवनमण्डन वस्तुपाल! ।

---

१ " स्वैरं चरन्तीमपि च त्रिलोक्याम् " इति तृतीयपादे पदचतुष्टयविपर्याससंनोदाहृतोऽयं श्लोकः वल्लभदेवस्य सुभाषितावल्यां कर्तुरुल्लेखं विना । २ वस्तुपालतेजःपालयोर्धर्मकृत्यान्युद्दिश्य । वस्तुपालस्य दानवीरतामुद्दिश्य ।

दानैकवीरपुरुषाः सममेव नीताः प्रत्यक्षतां कलियुगे भवता कवीनाम् ॥

इत्याशीर्वादवैदग्ध्यीं दधानं मागधाधिपम् ।
सन्मानदानतो नीत्वा गौरवं विससर्ज द्वः ॥
अत्रान्तरे स्तुतिं कश्चिन्मन्त्रिणः कविरब्रवीत् ।
अपूर्वं तव सङ्ग्रामकौशलं सचिवेश्वर ! ॥

तद्यथा—

अग्रेऽग्रे पदसङ्गतिर्विजयिनी सा काचिदोजोगुण-
प्रौढा सङ्कटनोदपादि कुटिलः शब्दक्रमोऽलङ्कृतः ।
दोषा ये प्रसरन्ति केऽपि परितः सर्वेऽपि ते धिक्कृता-
स्तज्जानामि वसन्तपाल कविना सङ्ख्येन सख्यं तव ॥
राजापद्रपुरःशुल्कमण्डपाऽयधनं ददौ ।
मन्त्री तस्मै तदा तुष्टो यदसौ कविकामधुक् ॥

यतः—

धात्रीं पवित्रयति यत्र नरेन्द्रपुत्रे सद्यः सुधास्नपितशंभुनिभैर्यशोभिः ।
अद्यापि विद्यत इवोद्यतकीर्तिमूर्तिर्देवो दिवाकरकुलैकललाम रामः ॥
पारिजातः कवीन्द्राणां सर्वज्ञानिसुधाम्बुदः ।
धर्मसूनुः सरस्वत्याः श्रीमवज्रमतांशुमान् ॥
यथौचित्येन सर्वेषां दर्शनानां च पोषकः ।
वस्तुपालो महामात्यस्तस्य राज्यधुरन्धरः ॥ ( युग्मम् )

यतः—" दानं दुर्गतवर्गसर्गविलयव्यत्यासवैहासिकं
शौण्डीर्यं भुजदर्प्पचण्डिमकथासर्वंकषं विद्विषाम् ।
बुद्धिर्यस्य दिगन्तभूतलभुवामाकृष्टिविद्या श्रियां
कस्यासौ न जगत्यमात्यतिलकः श्रीवस्तुपालो मुदे ॥
मन्ये धुरि स्थितममुं सचिवं शुचीनां मध्यस्थमेव मुनयः पुनरामनन्ति ।
मातः सरस्वति विवादपदं तदेतन्निर्णीयतां मनसि मे हि गतं चिरेण ॥ "

अत्रान्तरे कविः कश्चिद्विपश्चित्सूरिशालिनि ।
समाजे व्याजहार श्रीवस्तुपालस्तुतिं यथा ॥

१ वस्तुपालस्य शङ्खपराजयमुद्दिश्येदम् । २ वस्तुपालस्य दानान्युद्दिश्य । ३ वीरधवलसभायां
स्तुपालस्तुतिः ।

"सन्ततिः परलोकाय विवेकाय सरस्वती ।
लक्ष्मीः परोपकाराय सोमवंशेऽभवत्पुनः ॥"
तस्मै लक्षत्रयं मन्त्री तत्त्वत्रयपवित्रितः ।
द्रुतं विश्राणयामास द्रम्माणां प्रीतमानसः ॥
[1]अन्यदा वाङ्मयाम्भोधेः पारदृश्वाश्वराजभूः ।
कृपार्द्रहृदयं दृष्ट्वा सर्वाङ्गिषु निजं नृपम् ॥
महाभारतशास्त्रान्तर्द्वात्रिंशाधिकृतिस्थितम् ।
गाङ्गेयधर्मपुत्रादिराजेन्द्राख्यानमुत्तमम् ॥
अष्टाविंशाधिकारस्थं तथा शिवपुराणगम् ।
मद्यमांसपरीहारपुण्यराशिप्रकाशकम् ॥
आख्यायाख्याय सद्युक्त्या यथाप्रस्तावमात्मना ।
मांसास्वादसुरापाननिषेधव्रतनिर्मलम् ॥
विमुक्ताखेटकक्रीडं त्यक्तपर्वनिशादनम् ।
पराङ्गनापरिष्वङ्गावाङ्मुखं च विनिर्ममे ॥
[2]अथालङ्कारिकाणां मुख्याः श्रीमन्माणिक्यसूरयः ।
समये तीर्थयात्रायां आहूता अपि मन्त्रिणा ॥
काव्यप्रकाशसङ्केतनिर्मितिव्यग्रमानसाः ।
नेयुः स्वयं न च प्रैषि तैः कश्चिन्निजसंयतः ॥ (युग्मं)
तेषां लेखस्तदा प्रैषि तेजःपालेन मन्त्रिणा ।
आदेशाद्वस्तुपालस्य किञ्चिद्वक्रोक्तिगर्भितः ॥
"उत्प्लुत्योत्प्लुत्य पुनर्निपतति तत्रैव तत्रैव ।
वटकूपकूपमध्ये निवसति माणिक्यमण्डूकः ॥"
तदुक्तिविस्मितास्तेऽपि भृशं निःस्पृहवृत्तयः ।
स्वलेखं प्रेषयामासुस्तयोः श्रावकपाणिना ॥
"गुणालिजन्महेतूनां तुलानां हृद्विपाटयन् ।
वंशार्धार्धपरिस्फूर्त्या किं हि जैन विजृम्भसे ॥"
तद्वृत्तयान्तर्भृशं विद्धो मन्त्री तद्दर्शनोत्सुकः ।
तदीयं पौषधागारं स्तम्भतीर्थपुरे रहः ॥

---

१ वस्तुपालस्य महाभारतादिवाचनेन राज्ञो मद्यमांसादिनिवारणम् । एतच्च तस्य भारतपुराणादिग्रन्थाभ्यासनिवेदकमित्यत्रोद्धृतम् । २ काव्यप्रकाशसङ्केतकृन्माणिक्यसूरिप्रसङ्गः ।

लुण्टयित्वाखिलं वस्तु कृत्वैक— न्यवेशयत् ।
श्रुत्वा तस्यागमं तेऽपि दूनान्तःकरणा रयात् ॥ ( युग्मं )
श्रीमन्त्रिगुरुभिः साकमुदयप्रभसूरिभिः ।
समीपं मन्त्रिणः प्राप्य जगुराशीर्वचो यथा ॥
" तीर्थोद्धारधुरन्धर त्रिजगतीचिन्तैकचिन्तामणे
श्रीचौलुक्यनरेन्द्रराज्यरचनाविर्भाववदीक्षागुरो ।
श्रीमन्त्रीश्वर वस्तुपाल ! नृपतिव्यापारभारक्षमे
किं धर्मस्थितिविप्लवोऽजनि जने भूजानितुल्ये त्वयि ॥ "
उवाच सचिवः स्मित्वा भगवन् भवतः पुनः ।
धर्मकार्यदिदृक्षातो विप्लवोऽयमजायत ॥
निजानागमने हेतौ नैरुक्ते च यथास्थिते ।
क्षमित्वा निखिलं वस्तु मन्त्री तेषां समर्पयत् ॥
ततो नैकविधैः शुद्धैः सिचयैः सचिवेश्वरः ।
सोऽथ पूजां व्यधात्तेषां मन्तो नाश्चन्त्यनौचितीम् ॥
" एकं वासः सुरेशैः कृतसुकृतशतैर्जन्मकाले जिनानाम्
दत्तं दीक्षाक्षणे वा ध्वजवसनमथो एकमेवाम्बरं च ।
सूर्यादीनां ग्रहाणां पुनरपि विधिना दत्तमस्मिन्क्षणेऽसौ
सत्पात्रे भूरि यच्छन्नयतिमघवा नन्दताद्वस्तुपालः ॥ "
इत्युपदेशतस्तुष्टस्तेषां शास्त्रविदामसौ ।
सर्वेषां धर्मशास्त्राणामेकमादर्शमर्पयत् ॥
ऋणार्त्तो वामनस्थल्यां निवासी कविपुङ्गवः ।
तुष्टाव सचिवाधीशमन्यदा नृपसंसदि ॥
" विद्वद्दौर्गत्यहरः प्रपूजितसुरः सौजन्यरत्नाकरः
शश्वन्नीतिवरः प्रियंवदवरः प्रोद्यत्त्रिवर्गस्थिरः ।
दानोपेतकरः सुहृद्धितकरः कल्कावलीकातरः
प्रीतिप्रीतनरः सुधर्मरुचिरः सत्योऽस्तु मन्त्रीश्वरः ॥ "
तदनुप्राससंख्यानि लक्षाणि वितरंस्तदा ।
तस्मिन्प्रीत्याश्रयन्मन्त्री भोजराज इति श्रुतिम् ॥
अत्रान्तरे नरेन्द्राभवस्तुपालगुणस्तुतिम् ।
अकरोच्छङ्करस्वामी स्वमनोऽभीष्टसिद्धये ॥

---

१ वामनस्थली पण्डितप्रशंसा । २ स्तम्भतीर्थे ।

" गुणैः परेषां गुणशो गृहीतैर्गुणीति युक्ता किल कीर्तिरस्य ।
अप्यर्थिसार्थप्रतिपादितश्रीः श्रीमानिति ख्यातिरिदं तु चित्रम् ॥
कार्पण्यातिशयेन वेश्मनि धनं यः स्वं विधत्ते स तद्-
भोक्तुं नात्र न चाप्यमुत्र लभते हस्तादहस्तङ्गतम् ।
सत्पात्रप्रतिपादनेन सफलीभूतां विभूतिं पुन-
र्भुङ्क्तेऽस्मिन् सचिवेश्वरोऽनुगमयत्यन्यत्र जन्मन्यपि ॥ "
कलभान् कलभानष्टौ ददद्वर्षासनानि च ।
दीनाराष्टसहस्राणि वाजिनो गतिराजिनः ॥
तस्मै सपरिवाराय कवीन्द्रकुलहस्तिने ।
कविकल्पद्रुरित्याख्यां मन्त्री लेभे तदा भुवि ॥ युग्मं ॥
अन्येद्युर्द्युमदाकारः स्फारालङ्कारसारदृक् ।
निकषा मन्त्रिणं कश्चिद्दूरदेशात्समागमत् ॥
सन्मानासनदानेन सन्तोष्याभाषि मन्त्रिणा ।
कुतः स्थानादिहायासीद्भवानत्रभवान्धिया ॥
सोऽवग्देवाङ्गनागीतं दिवि देवविभोः पुरः ।
तवौदार्यगुणं द्रष्टुमिहागां वासवाल्यात् ॥
स्वर्नाथमंसदस्तर्हि वार्तां श्रावय काञ्चन ।
इत्युक्ते मन्त्रिराजेन कविराजोऽब्रवीदिति ॥
" देव स्वर्नाथ कष्टं ननु क इह भवान् नन्दनोद्यानपालः
खेदस्तत्कोऽद्य केनाप्यपहृत इतः काननात्कल्पशाखी ।
हुं मा वादीस्त्वमेवं किमपि करुणया मानवानां मयैव
प्रीत्यादिष्टोऽयमुर्व्यामिलकयति तलं वस्तुपालच्छलेन ॥ "
तस्मै दश सहस्राणि सुवर्णानामदादसौ ।
तवीनोक्तिरसास्वादमुदितो विदुराग्रणीः ॥
अत्रान्तरे नरेन्द्रेण कवयः प्रेरिताः पुनः ।
मन्त्रिणं वर्णयामासुर्वर्णनीयगुणाकरम् ॥

हरिहर उवाच—

"धन्यः स वीरधवलः क्षितिकैटभारिर्यस्येदमद्भुतमहो महिमप्ररोहः ।
दीप्रोष्णदीधितिसुधाकिरणप्रवीणं मन्त्रिद्वयं किल विलोचनतामुपैति ॥

१ वीरधवलसभायाम् । २ रैवतसङ्घाधिपत्यावसरे

आजन्मापि वशीकृताय सुकृतस्तोमाय यत्नान्मया
यद्यामात्यन कोऽपि कृपणकणः श्रीवस्तुपाल! त्वयि।
यत्कल्पद्रुमपल्लवद्युतिमवष्टभ्यैव कल्पद्रुमं
पाणिर्धिक्कुरुते तवैष मनुते कोऽमुं न दोषाश्रयः॥"

दामोदर उवाच—

"दैवे स्वर्गिण्युदयनसुते वर्त्तमानप्रभूणां
दूरादर्थो विरमति वत द्वारतो वारितः सन्।
दिष्ट्यैतस्मिन्नपि कुसमये जातमालम्बनेन
स्वच्छे वाञ्छा फलति महतां वस्तुपाले विशाले॥"

मदन उवाच—

"पालने राज्यलक्ष्मीणां लालने च मनीषिणाम्।
अस्तु श्रीवस्तुपालस्य निरालस्यरतिर्मतिः॥"

अथ सोमेश्वरः—

"कोटीरैः कटकाङ्गुलीयतिलकैः केयूरहारादिभिः
कौशेयैरपि वस्तुपालसचिवादासैर्विभूषाजुषः।
विद्वांसो गृहमागताः प्रणयिनीरप्रत्यभिज्ञाभृत-
स्तैस्तैः स्वं शपथैः कथं कथमिव प्रत्याययाञ्चक्रिरे॥"
एतेषामपि सर्वेषां ददौ दानेश्वराग्रणीः।
स प्राप्यानुमतिं राज्ञो द्रम्मलक्षं पृथक्पृथक्॥
तस्मिन्क्षणे निरीक्ष्याथामरचन्द्रकवीश्वरान्।
निद्रामुद्रावशात्कम्पमानमौलीनितस्ततः॥
सावधानशिरोरत्नं वस्तुपालोऽब्रवीदिति।
किं पुनर्भवतामत्रभवतां योगवेदिषु॥
प्रमीलाललनालीलाघोलनावशताधिकम्।
एवंविधनरेन्द्रादिसमाजेऽत्र निषेदुषाम्॥ ( त्रिभिर्विशेषकम् )
प्रबुद्धास्तेऽपि तद्वाक्यसुधासेकात्क्षणादपि।
जगुर्मन्त्रीन्द्र! नो निद्रा योगीन्द्राणां भवेत्क्वचित्॥
लक्ष्मीकेशवयोः किन्तु कान्तयोरिति कुर्वतोः।
वार्ता परस्परं सावधानाः शृण्मो वयं तथा॥
"लक्ष्मि प्रेयसि केयमास्यशितता वैकुण्ठ कुण्ठोऽसि किं

किं नो वेत्सि पितुर्विनाशमसमं सङ्घोत्थितैः पांसुभिः ।
मा भीर्भीरु गभीर एष भविनाम्बोधिश्चिरं नन्दतात्
सङ्घेशो ललितापतिर्जिनपतेः स्नात्राम्बुकुल्याः सृजन् ॥ "
इति श्रुत्वाद्भुतं तेषामर्थोत्पत्तिमसौ तदा ।
प्रीतः सिंहासनं सर्वकवीनां प्राङ्न्यवेशयत् ॥
" सरस्वतीकण्ठसुवर्णभूषा षड्दर्शनीकल्पतरुः पृथिव्याम् ।
औचित्यचिन्तामणिरार्हतेशसर्वज्ञधर्मैकधुराधुरीणः ॥
श्रीभोजराजः कविचक्रवर्त्ती समग्रचैत्योद्धृतिसावधानः ।
दानैकवीरः कलिकालकालो जिनेश्वराज्ञाप्रतिपालकश्च ॥ "
इत्यादिबिरुदश्रेणिं पठद्भिः कविकुञ्जरैः ।
श्रितः श्रीसचिवाधीशो वस्तुपालः स्फुरद्यशाः ॥
पुरः प्रेङ्खद्ध्वजश्रेणिश्छत्रचामरमण्डितः ।
लीलोत्तुङ्गगजारूढः प्रौढिमान्प्राचलत्पुनः ॥ ( चतुर्भिः कलापकम्
अत्रान्तरे कविः कश्चिदौचित्यचतुराग्रणीः ।
स्तुतिं श्रीआमदेवस्य बभाणेति सविस्मयाम् ॥
" द्वात्रिंशद्द्रम्मलक्षान्भृगुपुरवसतेः सुव्रतस्याग्रतोऽग्रे
कुर्वन्माङ्गल्यदीपं स सुरवराधीश्वरैः स्तूयमानः ।
योऽदादर्थिव्रजस्य त्रिजगदधिपतेः सद्गुणोत्कीर्त्तनायां
स श्रीमानाम्रदेवो जगति विजयतां दानवीराग्रयायी ॥ "

अन्यस्तु—

" श्रीशत्रुञ्जयपर्वते विरहिता लक्षैस्त्रिभिः कोटय-
स्तिस्रो येन जिनस्य जन्मनि परतृष्त्यै निधानीकृताः ।
प्रत्यक्षं त्रिजगज्जनस्य सुधिया श्रीमूलनाथार्हत-
श्चैत्यस्योद्धृतिकैतवात्स जयतात् श्रीवाग्भटो मन्त्रिराट् ॥ "

सोमेश्वरः—" स श्रीजिनाधिपतिधर्मधुराधुरीणः
श्लाघास्पदं कथमिवास्तु न वस्तुपालः ।
श्रीशारदासुकृतकीर्तिमयत्रिवेण्याः
पुण्यः परिस्फुरति जङ्गमसङ्गमो यः ॥ "

१ शत्रुञ्जयादितीर्थसङ्घप्रयाणसमये २ शत्रुञ्जये नाभिसूनुपूजावसाने

हरिहरः—

" सूरो रणेषु चरणप्रणतेषु सोमो वक्रोऽतिवक्रचरितेषु बुधोऽर्थबोधे ।
नीतौ गुरुः कविजने कविरक्रियासु मन्दोऽपि च ग्रहमयो न हि वस्तुपालः ॥"

मदनः—" श्रीभोजवदनाम्भोजवियोगविधुरं मनः ।
श्रीवस्तुपालवक्त्रेन्दौ विनोदयति भारती ॥ "

श्रीवीकलः—

" श्रीवामाम्बुजमाननं परिणतं पञ्चाङ्गुलिच्छद्मना
जग्मुर्दक्षिणपक्षशाखमयतां पञ्चापि देवद्रुमाः ।
वाञ्छापूरणकारणप्रणयिनां जिह्वैव चिन्तामणि-
र्जाता यस्य किमस्य शस्यमपरं श्रीवस्तुपालस्य तत् ॥ "

प्रत्येकं प्रददौ लक्षं द्रम्माणां स्वर्द्रुमोपमः ।
धर्मोन्नतिकृते तेषां सर्वेषां सचिवेश्वरः ॥

यतः—कुर्वन्मङ्गलदीपमार्हतमताकाशप्रकाशांशुमान्
श्रीशत्रुञ्जयपर्वते जिनपतेः श्रीनाभिसूनोः पुरः ।
द्रम्माणां किल विंशतिं युगयुतान्लक्षान्कवीनामहो
प्राग्वाटान्वयमण्डनं सचिवराट् श्रीवस्तुपालो ददौ ॥

" स्वस्ति श्रीभूमिसीमाविपिनपरिसरात्क्षीरनीराधिनाथः
पृथ्व्यां श्रीवस्तुपालं क्षितिधवसचिवं बोधयत्यादरेण ।
अस्यामास्माकपुत्र्यां कुपुरुषजनितः कोऽपि चापल्यदोषो
निःशेषः सैष लोकंपृणगुण भवता भालतो मार्जनीयः ॥ "

आनीताम्बुधिकाव्याय तस्मै सोमान्वयी ददौ ।
द्रम्माणां चतुरो लक्षांस्तदुक्तिप्रीणितोऽधिकत् ॥

" नोदत्ते कनकं सुमं सचिव ते कर्पूरपूरं स्मरन्
कौपीनेऽपि च कुप्यति प्रभुरसौ शंसन्दुकूलानि ते ।
दिग्धो दुग्धरसैर्जलेषु विमुखः श्रीवस्तुपाल त्वया
कर्पूरागुरुमोदितः पशुपतिर्नो गुग्गुलं जिघ्रति ॥ "

पुरः पठत मे भूय इत्यादिष्टास्तपोधनाः ।
पुनः पुनस्तदोचार्य तस्थुः खिन्नाशया भृशम् ॥
शक्तिसंख्यसहस्राणि द्रम्माणां धार्मिको ददौ ।
तेभ्यो वर्षासनैः साकं तावद्भिः सचिवस्तदा ।

---

१ सोमेश्वरदेवपूजावसरं

मन्त्रिणोऽवसरे तत्र ज्ञात्वा भावं मनोगतम् ।
कविः सोमेश्वरः स्माह तन्मनःप्रीतये यथा ॥
" इच्छासिद्धिसमन्विते सुरगणे कल्पद्रुमैः स्थीयते
पाताले पवमानभोजनजने कष्टं प्रणष्टो बलिः ।
नीरागानगमन्मुनीन्सुरभयः चिन्तामणिः क्वाप्यगात्
तस्मादर्थिकदर्थनां हि सहतां श्रीवस्तुपालः क्षितौ ॥ "
तदुक्तिरञ्जितस्वान्तो द्रम्माणां धनदोपमः ।
लक्षं दक्षपतिस्तस्मै सपादं प्रददावसौ ॥
अथ तुष्टमनाः मन्त्री तुष्टाव नतविष्टपम् ।
रोमाञ्चितवपुर्भक्त्या श्रीनेमि रचिताञ्जलिः ॥
" कल्पद्रुमस्तरुरसौ तरवस्तथाऽन्ये चिन्तामणिर्मणिरसौ मणयस्तथान्ये ।
धिग्जातिमेव ददृशे वत यत्र नेमिः श्रीरैवतेशदिवसो दिवसास्तथान्ये ॥
अभङ्गवैराग्यतरङ्गपूर्णे हृदि त्वदीये यदुवंशरत्न ! ।
कथं कृशाङ्ग्योऽपि हि मान्तु हन्त यस्मादनङ्गोऽपि पदं न लेभे ॥
यथायोगं स्तुवन्ति स्म तं कवीन्द्रसुरद्रुमम् ।
सृजन्तः सद्गुणश्रेणिकीर्तनं कवयो यथा ॥
श्रीमद्रैवतभूधरस्य व्रजतां पद्यां दुरारोहणां
दृष्ट्वा शिष्टजनाग्रणीर्व्यरचयन्नव्यां सुखारोहणाम् ।
लक्षैः प्राक्त्रिषमाधमेतुमदृशीं नेत्रर्षिसंख्यैः क्षणात्स
श्रीजैनमतांशुमान्विजयतां श्रीवाग्भटो मन्त्रिराट् ॥
यो मासक्षितयोपवाससुदितः श्रीअंबिकादेशतो
गत्वा हेमबलानके मणिमयीं श्रीनेमिमूर्तिं पराम् ।
आनीयात्र नरायणेन रचिते चैत्ये पुराऽतिष्ठपत्
श्रीब्रह्मेन्द्रविनिर्मितो स जयताच्छ्रीरत्ननामार्हतः ॥
श्रीसिद्धेशनृपान्नियोगिपदवीमासाद्य प्रौढिप्रदां
सौराष्ट्रायपदं विदम्भहृदयः सर्वं व्ययित्वा नवम् ।
श्रीनेमीश्वरमन्दिरं व्यरचयत् श्रीरैवतोर्वीधरे
दिव्याश्मप्रकरैरसौ विजयतां श्रीसज्जनो मन्त्रिराट् ॥
" पीयूषादपि पेशलाः शशधरज्योत्स्नाकलापादपि
स्वच्छा नूतनचूतमञ्जरिभरादप्युल्लसत्सौरभाः ।

१ रैवताद्रिमण्डननेमिनाथपूजावसरे.

वाग्देवीमुखजातसूक्तविशदोद्गारादपि प्राञ्जलाः
केषां न प्रथयन्ति चेतसि मुदं श्रीवस्तुपालोक्तयः ॥
वस्तुपाल तव पर्वशर्वरीगर्वितेन्दुकरजित्वरं यशः ।
क्षीरनीरनिधिवाससः क्षितेरुत्तरीयतुलनां विगाहते ॥ ''
इत्यादिस्तुतिमाकर्ण्य सकर्णः कर्णभूपवत् ।
कवीश्वरान्व्यधादेष तत्र पूर्णमनोरथान् ॥
गुरुत्वादन्यदा मन्त्री वर्ण्यमानो मनीषिभिः ।
लज्जयावाक्छिराः सोमेश्वरेणाभाणि तद्यथा ॥
'' एकस्त्वं भुवनोपकारक इति श्रुत्वा सतां जल्पितं
लज्जानम्रशिराः स्थितातलमिदं यद्वीक्षसे वेद्मि तत् ।
वाग्देवीवदनारविन्दतिलक श्रीवस्तुपाल ! प्रभो
पातालाद्बलिमुद्दिधीर्षुरसकृन्मार्गं ध्रुवं मृग्यसि ॥ ''
तत्पारिपार्श्विकश्रेणेर्दत्वा वर्षासनान्यसौ ।
तस्मै समर्पयल्लक्षं द्रम्माणां प्रीतितस्तदा ॥
तस्मिन्नवसरे दीनो द्विजातिः कश्चिदागतः ।
वस्त्रं देहि ममाप्येकं तं ययाचे दयोदधिम् ॥
तदादेशात्तदासाद्य वस्त्रं वस्त्राधिकारिणः ।
एकमेवाहृतं स्थूलमिति तुष्टाव मन्त्रिणम् ॥
'' क्वचित्तूलं क्वचित्सूत्रं क्वचित्कार्पासमेव च ।
देव ! त्वदरिनारीणां कुटीतुल्या पटी मम ॥ ''
मन्त्र्यादेशादसौ ससदशकृत्वो बभाण तत् ।
तावद्रम्मसहस्राणि सोऽदात्तस्मै प्रशस्तिमान् ॥
अन्यदा सचिवाधीशं बालचन्द्रः कवीश्वरः ।
किञ्चित्कार्यविशेषार्थी तुष्टाव नृपसंसदि ॥
'' गौरी रागवती त्वयि त्वयि वृषो बद्धादरस्त्वं पुन-
र्भूत्या त्वं च समुल्लसद्गुणगणः किं वा बहु ब्रूमहे ।
श्रीमन्त्रीश्वर नूनमीश्वरकलायुक्तस्य ते युज्यते
बालेन्दुं चिरमुच्चकै रचयितुं त्वत्तोऽपरः कः क्षमः ॥ ''
तदुक्तिप्रीणितः श्रीमान् समक्षं सर्वभूभुजाम् ।
पदोपवेशनं तेषां निर्ममेऽसौ कृतोत्सवम् ॥

---

१ सोमेश्वरकृता स्तुतिः । २ दीनद्विजातिकृता स्तुतिः । ३ बालचन्द्रकृता स्तुतिः ।

कवयस्तु स्तुवन्त्येनं तं तदा दलितापदम् ।
भट्टसोमेश्वरप्रायाः स्वेष्टसिद्धिसमीहया ॥[1]
" दुर्गः स्वर्णगिरिः स कल्पतरुभिर्भेजे न चक्षुर्दिवि
तस्थौ कामगवी जगाम जलधेरन्तः स चिन्तामणिः ।
कालेऽस्मिन्नवलोक्य याचकचमूं तिष्ठेत कोऽन्यस्ततः
स्तुत्यः सोऽस्तु न वस्तुपालसचिवो दानैकवीरः कथम् ॥
विजित्य करणग्रामं योगिनेव नियोगिना ।
अनेनोपार्जयाञ्चक्रे परमार्थमहामहः ॥
श्रीमन्ति दृष्ट्वा द्विजराजमेकं पद्मानि सङ्कोचमहो भजन्ति ।
समागतेऽपि द्विजराजलक्षे सदा विकासी तव पाणिपद्मः ॥
उच्चाटने विद्विषतां रमाणामाकर्षणे स्वामिहृदश्च वश्ये ।
एकोऽपि मन्त्रीश्वर वस्तुपाल ! सिद्धस्तव स्फूर्तिमियर्त्ति मन्त्रः ॥ "
[2]कौव्यमेकं कविः कश्चिद्दूरदेशान्तरागतः ।
निरुद्धो द्वारपालेन तद्दर्शनचिकीरपि ॥
विप्रस्य कस्यचिद्धस्तांबुजेन सज्जमानसः ।
देवार्चा कुर्वते तस्मै प्राभृतीकृतवान् किल ॥
सावद्यं पद्यमेकेन कविनेदं समर्पितम ।
देवावधार्यतामेवं सोऽप्यागत्य तमब्रवीत् ॥
" वस्तुपालस्य राज्ञस्य तैरेव परिभुज्यते ।
पारिजातस्य सौरभ्यममरैरेव नेतरैः ॥ "
इति तत्पदमालोक्य मन्त्री ब्रूते स्म तं द्विजम् ।
नास्त्यत्र दूषणं किञ्चिन्मुधा भ्रान्तिस्तवाऽभवत् ॥
तत्रैवाकार्य तं मन्त्री प्रीणयन्नथ गौरवैः ।
दशहेमसहस्राणां दानेन समतूतुषत् ॥
[3]अन्यदा तु कविः कश्चिद्दारिद्र्येणातिपीडितः ।
अभाणीत्सचिवाधीशं प्रति विद्वत्सुरद्रुमम् ॥
" स्नेहः साधुजने न भोजनविधौ वासः कुटीकोटरे
देहस्यावरणे न पुष्पमधिकं नेत्रे न केशोच्चये ।
अर्थः सूक्तिनवकाव्यनिकरे ग्रन्थौ न मन्त्रीश्वर !

---

१ सोमेश्वरगादिकविकृता स्तुतयः । २ देवार्चायां प्राभृतीकृतं कस्यचन दूरदेशागतकवेः । ३ दारिद्र्यपराभूतस्य कस्यापि कवेः ।

स्याद्वृत्तिः पठने न जीवनविधौ प्रायः कवीनां कलौ ॥ "
तदुक्तं मन्त्रिराट् श्रुत्वा तत्कदुःखजिहासया ।
द्रम्माणां त्रीणि लक्षाणि त्रीणि वर्षासनान्यदात् ॥
वाजिनां यानपात्रेषु तीरे प्राप्तेषु भूरिषु ।
वारिधेस्तटमायासीत्सोऽन्यदा तद्दिदृक्षया ॥
उत्तार्यमाणा यत्नेन यानपात्राज्जनादिभिः ।
तेजस्विनस्तदा जाता वाजिनो मन्त्रिदृक्पथे ॥
तानालोक्य कवीनेष दानवीराग्रणीर्जगौ ।
" प्रावृट्काले पयोराशिः कथं गर्जितवर्जितः ? ॥ "
सोमेश्वरस्तदा शीघ्रं कविस्तां समपूरयत् ।
" अन्तःसुप्तजगन्नाथनिद्राभङ्गभयादिव ॥ "
षोडश प्रददौ तस्मै कवये कविकुञ्जरः ।
समस्यापूरणात्प्रीतो वाजिनो वेगराजितः ॥
पुनः कवीनां सोल्लासः समस्यायाः पदं पुरः ।
तेजःपालाग्रजोऽपाठीत् " काकः किं वा क्रमेलकः " ॥
" येनागच्छन्समाख्यातो येनानीतश्च मे पतिः ।
प्रथमं सखि कः पूज्यः काकः किं वा क्रमेलकः ॥ "
अत्रान्तरे कविः कश्चित्तमेवं सस्पृहोऽवदत् ।
स्तौति त्वां ब्रह्मणः पुत्री धर्मपुत्रप्रभं प्रभो ॥
" स्वस्ति श्रीधर्मपुत्रं त्रिभुवनजननी श्रीमती ब्रह्मपुत्री
धात्र्यां श्रीवस्तुपालं कुशलयति सदा कार्यमेतन्निवेद्य ।
योऽभूत्कल्पद्रुकल्पः सकलतनुमतां सोऽधुना भोजराज-
स्तत्सीदंतस्त्वयैते जगति तनुभृतो रक्षणीयाः प्रयत्नात् ॥ "
इति वाग्वादिनीकाव्यं निशम्य मुदितः किल ।
तं लक्षद्रम्मदानेन प्रीणयित्वा दयादधिः ॥
मन्त्री सीदज्जनाधारमुद्दिश्याभिग्रहं ललौ ।
सीदल्लोकसमाध्यर्थं द्रम्मकोटिव्ययो मया ॥
विभवे सति कर्तव्यः प्रतिवर्षमतः परम् ।
दयादानं यतो ख्यातं हेमवद्धातुषूत्तमम् ॥ त्रिभिर्विशेषकम् ।

---

१ समुद्रतटे समस्यापूर्तिकृद्भ्यो वाजिनां दानम् । २ वस्तुपालाय ब्राह्म्याः सन्देशः ।

तच्चातुर्यगुणाकृष्टहृदयः स्तुतिमाननोत् ।
वस्तुपालो यशोवीरमन्त्रिणः सद्गुणोदधिः ॥
" बिन्दवः श्रीयशोवीर मध्ये शून्या निरर्थकाः ।
संख्यावन्तो निगद्यन्ते त्वयि केन पुरस्कृताः ॥
यशोवीर लिखत्याख्यां यावच्चन्द्रे विधिस्तव ।
न भाति भुवने तावदाद्यमप्यक्षरद्वयम् ॥
सन्तः समन्तादपि तावकीनं यशो यशोवीर बत स्तुवन्ति ।
जाने जगत्मज्जन लज्जमानः प्रविश्य कोणे त्वमतः स्थितोऽसि ॥
प्रकाश्यते सतां साक्षाद्यशोवीरेण मन्त्रिणा ।
मुखेन्दुज्योतिषा ब्राह्मी करे श्रीः स्वर्णमुद्रया ॥ "

यशोवीर उवाच—

"श्रीमत्कर्णपरम्परागतभवत्कल्याणकीर्तिश्रुतेः
प्रीतानां भवदीयदर्शनविधौ नास्माकमुत्कं पुनः ।
श्रुत्यप्रत्ययिनी सशङ्कहृदया ह्यालोकविश्रम्भिणी
दाक्षिण्यैकनिधान ! केवलमियं दृष्टिः समुत्कण्ठते ॥ "
दानलीलायितं श्रुत्वा तस्य विश्वातिशायिकम् ।
तत्रागादन्यदा वैरिसिंहः सत्कविपुङ्गवः ॥
तं कविं सचिवो वीक्ष्याब्रवीत्त्वं कुत आगतः ।
देवपत्तनतो देव प्राप्तोऽहं सोऽवदत्पुनः ॥
उमामहेशयोस्तत्र सुखसागरमग्नयोः ।
अस्ति स्फातिमती प्रीतिरिति मन्त्रिणि वादिनि ॥
तत्कालप्रतिभोत्पन्नकाव्यमेतत्कवीश्वरः ।
व्याजहार सुधाधारश्रवं मन्त्रिप्रसत्तये ॥
" त्वं जानीहि मयास्ति चेतसि धृतो विश्वोपकारव्रती
किं स्वामिन्भविता स शीतकिरणो नो स्वर्गिवृक्षो न हि ।
पर्जन्यो न हि चन्दनो न हि ननु श्रीवस्तुपालस्त्वया
ज्ञातं सम्प्रति शैलपुत्रि शिवयोरित्युक्तयः पान्तु वः ॥ "
पुनर्वदेति तेनोक्तः स कवीशस्त्रिरब्रवीत् ।
मन्त्री तस्मै ददौ प्रीत्या द्रम्मलक्षत्रयं ततः ॥

१ यशोवीरस्तुतिः । २ वैरिसिंहकृता स्तुतिः ।

## IV

( राजशेखरकृतचतुर्विंशतिप्रबन्धात् )

अत्रान्तरे वीरधवलप्रहितमैन्यचंपितेन महाराष्ट्रप्रभुणा सपादकोटिहेमप्रमितो दण्डः प्रहितः। श्रीवस्तुपालेन तद्धेम चतुर्दिग्यात्रिकेभ्यो याचकेभ्यो अदायि विवेकात्। तद्दृष्ट्वा हरिहरो वर्णयति—

" आः साम्यं न सहेऽहमस्य किमपि क्रोडीकृतैकश्रिया
याञ्चोत्तानकरेण स्वर्वितनिजाकारोष्मणा शार्ङ्गिणा।
येनैताः पुरुषोत्तमाधिकगुणोद्गारेण युद्धार्णवा-
दाकृष्यैव तथा श्रियः शकलशः कृत्वार्थिनामर्पिताः॥ "

अथ मन्त्रिगृहं गतोऽसौ। गुर्वीसभा, मन्त्र्यभ्युत्थानं चक्रे ऊचे च—

सुधा मधु सुधा सीधु सुधा सोऽपि सुधारसः।
आस्वादितं मनोहारि यदि हारिहरं वचः॥

पण्डितस्तूचे—"देव लघुभोजराज विचारचतुर सरस्वतीकण्ठाभरण अवधारय, वयं पण्डिताः, अस्माकं माता सरस्वती, सा च त्रिभुवनचारिणी। एकदा भारत्या सह महेन्द्रस्य सभामगमाम। स च सुधर्मा नाम इन्द्रः श्रीमान्, ३ कोट्यः सुराङ्गनाः, ८४ सहस्राणि सामानिकाः। तथा—

द्वादशार्का वसवोऽष्टौ विश्वेदेवास्त्रयोदश।
षट्त्रिंशत्तुषिताश्चैव षष्टिराभास्वरा अपि॥
षट्त्रिंशदधिके महाराजिकाश्च शते उभे।
रुद्रा एकादशैकोनपञ्चाशद्वसवोऽपि च॥
चतुर्दश तु वैकुण्ठाः सुशर्माणः पुनर्दश।
साध्याश्च द्वादशेत्याद्याः प्रसिद्धा गणदेवताः॥

वयं विस्मिताः स्थिताः, अहो तपःफलभोगः। अत्रान्तरे आगतः तत्र कश्चन बुम्बावक्त्रः—

" देव स्वर्नाथ कष्टं ननु क इह भवान्नन्दनोद्यानपालः
खेदस्तत्कोऽद्य केनाप्यहह हृत इतः काननात्कल्पवृक्षः।
हुं मा वादीस्तदेतत्किमपि करुणया मानवानां मयैव
प्रीत्यादिष्टोऽयमुर्व्यास्तिलकयति तलं वस्तुपालच्छलेन॥ "

---

१ हरिहरप्रबन्धात्। २ हरिहरप्रबन्धात्।

एवं तत्रालापं कृत्वा विस्मितोऽहं भारत्या सह पञ्चमं कल्पद्रुमं त्वां द्रष्टुमागाम्। एवं सविस्तरं काव्यं व्याख्याय स्थितः पण्डितः। मन्त्री यावत्किं ददामि इति चिन्तयति, तावत् डोर्डीयवंश्यराणभीमदेवेन जात्या वाहनोत्तीर्णा चतुर्विंशतिरश्वाः एकं च दिव्यं पदकं प्राभृतमानीतम्। तदेव पण्डिताय सर्वं प्रदत्तम्। तुष्टोऽसौ पञ्चमः कल्पतरुर्भवसीत्युक्त्वा स्वोत्तारकमगात्।

एकदा तौ भ्रातरौ द्वावपि मन्त्रिपुरन्दरौ महर्द्धिसङ्घोपेतौ श्रीपार्श्वनाथं नन्तुं स्तम्भनकपुरमीयतुः। प्रथमदिने ससङ्घौ तौ श्रीपार्श्वनाथस्य पुरो भावभासुरौ श्रावकश्रेणिपुरस्सरौ स्थितौ। गीतरासादि वर्त्तते। सङ्घोपरोधात्तत्रत्याध्यक्षाः सूरयो मल्लवादिनः समाकारिताः। ते यावद्देवगृहं प्रविशन्ति तावत्पठन्ति। " अस्मिन्नसारे संसारे सारं सारङ्गलोचना " ॥

मन्त्रिभ्यां श्रुतं चिन्तितं च, अहो मठपतिर्गृहवद्देवगृहेऽपि शृङ्गाराङ्गगर्भं पद्यं प्रस्तौति. देवनमस्कारादिकमुचितमिह तन्नाधीते तस्माददृष्टव्योऽसौ। उपविष्टः सूरिः। अन्येऽपि सूरयः शतशः पङ्क्तौ निषण्णाः। मङ्गलदीपान्ते अपरसूरिभिर्मल्लवादिन एवाशीर्वादाय प्रेरिताः। मन्त्री पुरस्तिष्ठति। अस्मिन्नसारेसंसारे इत्यादिपादद्वयं भणितं तैः। मन्त्री हस्तेन वन्दित्वा विरक्तो गतः स्वोत्तारकम्। दिनान्यष्ट एवं पाठश्च। मन्त्र्यवज्ञा चारोहत्प्रकर्षं। अष्टम्यां रात्रौ मन्त्री मुत्कलापनिकां कर्तुं देवरङ्गमण्डपे निविष्टः। पुरो धनबद्रकाः। कोऽपि कविराह—

" श्रीवस्तुपाल तव भालतले जिनाज्ञा
वाणी मुखे हृदि कृपा करपल्लवे श्रीः।
देहे द्युतिर्विलसती रुपेव कीर्तिः
पैतामहं सपदि धाम जगाम नाम ॥ "

अपरस्तु—" अतिस्मरन्तीमपि गेहगर्भात्कीर्तिं परेषामसतीं वदन्ति।
स्वैरं भ्रमन्तीमपि वस्तुपाल त्वत्कीर्तिमाहुः कवयः सतीं तु ॥ "

इतरस्तु—"सेयं समुद्रवसना तव दानकीर्त्तिः पूरोत्तरीयपिहितावयवा समन्तात्।
अद्यापि कर्णविकलेति न लक्ष्यते यत्तन्नाद्भुतं सचिवपुङ्गव वस्तुपाल! ॥"

कश्चित्तु—"क्रमेण मन्दीकृतकर्णशक्तिः प्रकाशयन्ती च बलिस्वभावम्।
कैर्नानुभूता सशिरःप्रकम्पं जरेव दत्तिस्तव वस्तुपाल! ॥"

१ वस्तुपालप्रबन्धात्

तेभ्यः कविभ्यः सहस्रलक्षाणि ददिरे। एवं गायनभट्टादिभ्योऽपि। यावज्जातं प्रातरिव तदा मल्लवादिभिः स्वसेवकाः चैत्यद्वारद्वयेऽपि नियुक्ताः। एकं द्वारं अन्यदिशि, एकं च मठदिशि। उक्तं च तेभ्यः मन्त्री चैत्यान्निस्सरन् ज्ञापनीयः। दक्षिणेन वस्तुपालो मठद्वारान्निर्गच्छति, तावता सेवकज्ञापिताः सूरयः सम्मुखाः स्थिताः, मन्त्रिणा रीढया भ्रूप्रणाम इव कृतः। आचार्यैरभिहितं,

"दूरे कर्णरसायनं निकटतस्तृष्णाऽपि नो शाम्यति"। विजीयतां, तीर्थानि पूज्यन्ताम्॥ मन्त्री कौतुकात्तथैव तस्थौ, किंपर्यवसानेयं प्रस्तावनेति ध्यानादूचे च, न विद्मः परमार्थं किमेतदभिधत्ते। आचार्यैरुक्तं, पुरो गम्यतां, भवतां कार्याणि भूयांसि। मन्त्री सविशेषं पृच्छति। सूरयो वदन्ति, सचिवेन्द्र! श्रूयतां, मरुग्रामे क्वचिद्ग्रामाराः स्थूलबहुला लोमशाः पशवो वसन्ति, पर्षदि निषीदन्ति, कपोलवल्लरीं वादयन्ति, नत्वैकदा वेलाकूलीयचरः पान्थ आगमत्। नवीन इति कृत्वा ग्राम्यैराहूतः, पृष्टः, त्वं कः, कुत्यः। तेनोक्तमहं समुद्रतटेऽवात्सम्। पान्थः पुरोग्रामिकैः पृष्टः, समुद्रः केन खानितः। तेनोचे स्वयम्भूः सः। पुनस्तैः पृष्टं, कियान्सः। पान्थेनोक्तमलब्धपारः। किं तत्रास्ते इति पृष्टे पुनस्तेनाचख्ये,

"ग्रावाणो मणयो हरिर्जलचरो लक्ष्मीः पयोमानुषी
मुक्तौघाः सिकताः प्रवाललतिकाः शैवालमम्भः सुधा।
तीरे कल्पमहीरुहः किमपरं नाम्नापि रत्नाकरः

इति पादत्रयं पठित्वा व्याख्याय पुरो गतः पान्थः। तेषु ग्राम्येष्वेकः सकौतुकः पृच्छन्पृच्छं समुद्रतटमगात्। दृष्टः कल्लोलमालाचुम्बितगगनाग्रः समुद्रः। तुष्टः सः अचिन्तयच्च कल्याः सर्वा लप्स्यन्ते। प्रथमं तृषितः सलिलं पिबामि। पीतं तद्दग्धः कोष्ठः। ततः पठति.

"वरि वियरो जहिं जणु पियइ घुट्टुग्घुट्टु चुलुएहिं।
सायरि अत्थि बहु य जल छि खारउं किं तेण॥"

तैरेव पादैर्नष्टः स्वास्पदं गतः। तथा वयमपि स्मः। मन्त्रिणोक्तं, कथं तथा यूयं, यथा स ग्राम्यः। सूरयस्तारमूचुः। महामात्य! वयमिह श्रीपार्श्वनाथसेवकाः त्रैविद्यविद्याविदः सर्वेभ्यः शृणुमः, यथा धवलक्के श्रीवस्तुपालो मन्त्री सरस्वतीकण्ठाभरणो भारतीप्रतिपन्नपुत्रो विद्वज्जनमधुकरसहकारः सारासारविचारविदास्ते। तदुत्कण्ठितास्तत्रागन्तुमीश्वरत्वाच्च न गच्छामः

क्वापि। कदाचिदत्र तीर्थमित्येतात्र मन्त्री तस्य पुरो वक्ष्यामः स्वैरं सूक्तानि, इति ध्यायतामस्माकं मन्त्रिमिश्रा अप्यागताः। यावत्पठ्यते किमपि तावदसंभावनयावज्ञापरा यूयं स्थिताः, ततः किं पठ्यते गच्छत गच्छत उत्सुरं भवति। मन्त्री प्राह मम मंतुः क्षम्यतां, किमेतत्पठितुमारेभे भवद्भिः। आचार्या जगदुः, देव यदा युवां बान्धवौ श्रावकश्रेण्यग्रे राजराजेश्वरौ दिव्यभूषणौ श्रावकाश्च धनाढ्या दृष्टाः गीतानुच्छ्रयश्च, तदैतन्नश्चित्ते बभूव। जगति स्त्रीजातिरेव धन्या, यद्भुवो जिनचक्रार्धचक्रिनलकर्णयुधिष्ठिरविक्रमसातवाहनादयो जाताः, संप्रत्यपीदृशाः सन्ति, तस्मात् श्रीशांबश्रीशान्तिब्रह्मनाग-आमदत्तनागडवंद्य-श्रीआभूनन्दिनी श्रावकोत्तमा कुमारदेवी श्लाघ्या, ययैतौ कलियुगमहान्धकारमज्जज्जिनधर्मप्रकाशनप्रदीपौ ईदृशौ नन्दनौ जातौ, इत्येवं चिन्तयतामस्माकं पत्यपादद्वयं वदनादुद्गतं, जिननमस्कारादि विस्मृतं, पश्चार्धं तु शृणुत।

"यत्कुक्षिप्रभवा एते वस्तुपाल भवादृशाः"। सविस्तरं व्याख्यानं कृतं। जिह्राय सचिवेन्द्रः, पदोर्लगित्वा सूरीन् क्षमयित्वा कोशान्ते ग्राम एक आगात्। तत्र स्नानभुक्तविलिप्तः स्वं भृत्यं सचिवमेकमाकार्यादिक्षत् इयं वाहिनी मे सहस्रदशकवदरकयुक्तसूरिभ्यां सत्र देया। गतो मन्त्रिसेवकस्तत्र, भाषिताः सूरयः, मन्त्रिदत्तमिदमवधार्यतामाग। आचार्यैर्दृष्टम्। अश्वमारुह्य भटशतोल्लालितकृपाणजल्पप्लावितस्वास्तत्र गताः यत्र श्रीवस्तुपालः, उदितश्च तैः, मन्त्रिन् किमहमुचितभार्या, किं चारणाः, किं वन्दी, किं तु सर्वसिद्धान्तपारगः सम्यग्जैनः सूरिः। मया मनःप्रमोदेन एक उपश्लोकनमुक्तं तन्मूल्यभूतामिमां वो दत्तिं कथं गृह्णामि, न मयेदं वित्तार्थमभिहितं किन्त्विदमन्तर्मानसं ध्यात्वा यथाद्यापि जयति जिनपतिमतम्। न गृह्णाम्येव। मन्त्र्यप्याह भवन्तो निस्पृहत्वान्न गृह्णीथ, वयं तु दत्तत्वान्न प्रतिगृह्णीमः, तर्हि कथमनेन हेम्ना भवितव्यमिति शिक्षां दत्त। ततः सूरिभिर्जगदे जगदेकदानी मन्त्री। मन्त्रिन् स्वगृहाय सम्प्रति गम्यते भवद्भिः, तीर्थाय कस्मैचिद्वा। मन्त्र्याह इतो भृगुपुरं श्रीसुव्रततीर्थं वन्दनार्थं गच्छन्तः स्मः। आचार्याः प्राहुः, तर्हि लब्धोऽयं हेमव्ययोपायः। तत्र लेप्यमयी प्रतिमास्ति। तत्र स्नात्रसुखासिका न पूर्यते श्रावकाणाम्। तस्मादनेन राया रिरीहेममयीं स्नात्रप्रतिमां निर्मापयत। मन्त्रिणो ध्वनितं तत्, तथैव कृतम्।

एकदा मन्त्रिभ्यां श्रीसोमेश्वरादिकविभ्यो विपुला वृत्तिः कृता भूम्यादिदानैः। ततः पठितं सोमेश्वरेण।

१ वस्तुपालप्रबन्धात्

" सूत्रवृत्तिः कृता पूर्वं दुर्गसिंहेन धीमता ।
विसूत्रे तु कृता तेषां वस्तुपालेन मन्त्रिणा ॥ "

अथ रात्रौ तन्मयतया नाभेयपूजाध्यानदानपूजाः । तदा कवयः पठन्ति—

" ये पापप्रवणाः स्वभावकृपणाः स्वामिप्रसादोल्बणा-
स्तेऽपि द्रव्यकणाय मर्त्यभषणा जिह्वे भवत्या स्तुताः ।
तस्मात्त्वं तदघापघातविधये बद्धादरा साम्प्रतं
धर्मस्थानविधानधर्षितकलिं श्रीवस्तुपालं स्तुहि ॥ "

अपरस्तु—

" शूरो रणेषु चरणप्रणतेषु सोमो वक्रोऽतिवक्रचरितेषु बुधोऽर्थबोधे ।
नीतौ गुरुः कविजने कविरक्रियासु मन्दोऽपि च ग्रहमयो न हि वस्तुपालः ॥ "

अन्यस्तु—" श्रीभोजवदनाम्भोजवियोगविधुरं मनः ।
श्रीवस्तुपालचन्द्रेन्दौ विनोदयति भारती ॥ "

इतरस्तु—" श्रीरामाम्बुजसान्नसं परिगतं पश्चाद्बलिः कर्णतो
जग्मुर्दक्षिणपक्षमाश्रयवतां पक्षाणि देवद्रुमाः ।
वाञ्छापूरणकारणं प्रणयिनां जिह्वे च चिन्तामणि-
र्जाता यस्य कियस्य शरणमपरं श्रीवस्तुपालस्य तत् ॥ "

सर्वत्र लक्षदानम् ।

पेपाठ च आनन्दाश्रुनिर्झरिताक्षः,

" कल्पद्रुमस्तरुरसौ तरवस्तथान्ये चिन्तामणिर्मणिरसौ मणयस्तथान्ये ।
धिग्जातिमेव ददृशे वत यत्र नेमिः श्रीरैवतेऽद्रिवसौ दिवसास्तथान्ये ॥
अभङ्गवैराग्यतरङ्गरङ्गे चित्ते त्वदीये यदुवंशरत्न ।
कथं कृशाङ्ग्योऽपि हि सा नु हन्त यस्मादनङ्गोऽपि पदं न लेभे ॥ "

आरात्रिके अर्थिनां ससम्भ्रमं मन्त्रिमध्ये झम्पापतनं दृष्ट्वा सोमेश्वरकविः—

" इच्छासिद्धिसमुन्नते सुरगणे कल्पद्रुमैः स्थीयते
पाताले पवमानभोजनजने कष्टं प्रणष्टो बलिः ।
नीरागानगमन्मुनीन्सुरभयः चिन्तामणिः क्वाप्यगात्
तस्मादर्थिकदर्थनां विषहतां श्रीवस्तुपालः क्षितौ ॥ "

लक्षाः सपादा अस्य दत्तौ मन्त्रिणः । दानमण्डपिकायां निषण्णो निरर्गलं दददेवं स्तुतः केनापि

१ रैवताद्रियात्रायाम् ।

"पीयूषादपि पेशलाः शशधरज्योत्स्नाकलापादपि
स्वच्छा नूतनचूतमञ्जरिभरादप्युल्लसत्सौरभाः।
वाग्देवीमुखसामसूक्तविशदोद्गारादपि प्राञ्जलाः
केषां न प्रथयन्ति चेतसि मुदं श्रीवस्तुपालोक्तयः॥
वस्तुपाल तव पर्वशर्वरीगर्विनेन्दुकरजित्वरं यशः।
क्षीरनीरनिधिवासमः क्षितेरुत्तरीयतुलनां विगाहते॥"

एवं भावमापूर्य देवोत्तमं श्रीनेमिमापृच्छ्य सर्वास्तीर्थचिन्ताः कृताः, निर्माल्यपदं दत्वा पर्वतादुदतारीत्, न मनां हृदयान्नापि महत्त्वात्। कवयस्तु पठन्ति—

"श्रीमन्ति दृष्ट्वा द्विजराजमेकं पद्मानि सङ्कोचमहो भजन्ते।
समागतेऽपि द्विजराजलक्षे सदा विकासी तव पाणिपद्मः॥
उच्चाटने विद्विषतां रमाणामाकर्षणे स्वामिहृदश्च वश्ये।
एकोऽपि मन्त्रीश्वर वस्तुपाल सिद्धस्तव स्फूर्तिमियर्त्ति मन्त्रः॥"

एवं स्तूयमान उत्तमत्वाल्लज्जमानो वस्तुपालोऽधो विलोकयामास। ततो महानगरवासिना नानाककविना भणितम्।

"एकस्त्वं भुवनोपकारक इति श्रुत्वा सतां जल्पितं
लज्जानम्रशिराः स्थिरातलमिदं यद्वीक्षसे वेद्मि तत्।
वाग्देवीवदनारविन्दतिलक श्रीवस्तुपाल! ध्रुवं
पातालाद्बलिमुद्दिधीर्षुरसकृन्मार्गं भवान्मार्गति॥"

तदैव कृष्णनगरीयकविकमलादित्येन भङ्ग्यन्तरमुक्तम्।

"लक्ष्मीं चलां त्यागफलां चकार यां मार्ऽर्थिश्रिता कीर्तिमसूत नन्दिनीम्।
सापीच्छया क्रीडति विष्टपाग्रतः तल्लज्जयाऽसौ नमते यतो महान्॥"

## श्लोकानुक्रमणिका

## श्लोकानुक्रमणिका

CORRIGENDA

P. 2. l. 5 यत्रैति
P. 3. l. 2 येहरः
P. 4. l. 7 निच्छद्म नेदम्
P. 5. l. 8 दौकितोज्ज्वल०
P. 11. l. 10 नमोऽत्रभवते भवते
P. 11. l. 12 शीघुनाऽऽकुल०
P. 11. l. 4 महःस्खलनावलक्ष
P. 29. l. 6 क्रीडङ्क्रीड
P. 34. l. 13 कारिकापरमार्थो
P. 42. l. 23 कम्पिनो
P. 43. l. 7 पङ्क्ति
P. 44. l. 5 राधा
P. 45. l. 1 स्फुलिङ्गै
P. 49. l. 3 निम्नगा
P. 51. l. 6 विरहार्त्या
P. 59. l. 5 नैवाप
P. 63. l. 20 व्यावन्य कर्तव्यता
P. 67. l. 22 व्रुमह
P. 68. l. 26 तिलक श्रीवस्तुपाल
P. 69. l. 6 पयःपान
P. 70. l. 19 दानकीर्तिः
P. 73. l. 1 लिहोर्मि
P. 73. l. 27 दर्धाचिसमुत्थ
P. 81. l. 22 ऽधिकम्
P. 84. l. 3 चक्षुर्दिवि
P. 91. l. 11 जिह्वैव
P. 99. l. दत्त्वा & महत्त्वात्

## NOTES.

**P.** 4. l. 3 मोढेरक—is the modern town of Modhera in Kadi District. The account of the author's गृहस्थाश्रम given in the following verses is not to be found in any other work of the author.

P. 4. l. 30. हरिभद्र was the Guru of Bâlachandra. The lineage of Bâlachandra is given at length in his commentary on the Upadeśa Kandalî of Âsada. In the Chandra Gacchha, there flourished Pradyumna Sûri who administered religious advice to the king of Talavâtaka. Chandraprabha Sûri who succeeded him composed a morning hymn to Jina. After him, came Dhaneśvara who got the mantra from his deceased Guru and instructed the goddess of Samayû Town. He had four pupils Vîrabhadra, Devasûri, Devabhadra and Devendra Sûri like the four hands of Sarasvatî. The last Devendra Sûri who stayed in Mandalî Town which abounded in Jain temples performed the installation ceremonies of the temple of Lord Mahâvira at Mandalî. He with his own hand made Bhadreśvara Sûri of imperishable fame his successor. Abhayadeva Sûri who vanquished disputants succeeded him. It was after drinking the nectar of his religious instructions that Âsada composed his Vivekamanjarî and Upadeśa Kandalî. His pupil Haribhadra Sûri was well versed in six schools of philosophy and literature.

*cf.* श्रीवीरसेन इति वज्रमुनीश्वरस्य पट्टे बभूव दशपूर्वधरस्य पूर्वम् ।
शाखा य एष जिनशासनकल्पवृक्षस्कन्धो दिगन्तरततीः सुषुवे चतस्रः ॥ १ ॥
शाखाङ्कुरा गणभृतोऽत्र बभूवुरेते नागेन्द्र इत्यमलकीर्त्तिनदीनगेन्द्रः ।
चन्द्रश्च सान्द्रमतिभागथ निर्वृतिश्च विद्याधरश्च भुवि विश्रुतनामधेयः ॥ २ ॥
एतेषु चन्द्र इति यः प्रबभूव सूरिस्तस्य प्रफुल्लगुणगच्छवनस्य गच्छे ।
भूयांस एव भुवनत्रयवन्दनीयाः सञ्जज्ञिरे गणधरा गुणिनो धरायाम् ॥ ३ ॥
प्रद्युम्नसूरिरिति तेषु रतिप्रियस्य भेत्ता बभूव निखिलागमशास्त्रवेत्ता ।
येन प्रबोध्य तलपाटपुरे नरेन्द्रमुत्पाट्यतां तलत एव कलिर्बभूव ॥ ४ ॥
श्रीचन्द्रगच्छनवकैरवकेलिचन्द्रश्चन्द्रप्रभः प्रभुरभिज्ञतमस्ततोऽभूत् ।
यो विश्वलोकविदितं मुदितान्तरात्मा प्राभातिकीं जिनपतिस्तुतिमाततान ॥ ५ ॥
तस्माद्धनेश्वर इति श्रुतपारदृश्वा विश्वाभिरामचरितोऽभ्युदियाय सूरिः ।
यो मन्त्रमाप गुरुतः सुरभूयभाजः प्राबोधयच्च समयूपुरदेवतां यः ॥ ६ ॥
तस्याभितः समभवन् भुवनप्रशस्याः शिष्याः श्रुताक्षकमलोद्धरणप्रवीणाः ।
चत्वार ऊर्जितरुचो विदुषां निषेव्या देव्याः करा इव पुराणकविप्रसूतेः ॥ ७ ॥
श्रीवीरभद्र इति सूरिरमीषु मुख्यः श्रीदेवसूरिरिति भूरिगुणो द्वितीयः ।
श्रीदेवभद्र इति सूरिवरस्तृतीयो श्रीशान्तिसूरिरिति च प्रथितश्चतुर्थः ॥ ८ ॥
श्रीमण्डलीति नगरी नगरीतिकूटप्रासादसंहतिरितोऽस्त्यमरावतीव ।
देवेन्द्रसूरिसुगुरुर्विततान तस्यां तद्वासिनां च हृदि मूर्ध्नि च वासलक्ष्मीम् ॥ ९ ॥

प्रातिष्ठिपन्निजपदे स विनिद्रभद्रे भद्रेश्वरं प्रभुमनश्वरकीर्त्तिपूरम् ।
आख्यामनङ्ग इति सङ्गतवान् यदीयध्यानानले मदनवन्मदनो विलीय ॥ १० ॥
तत्पट्टमौलिमणिताभभजद्भवार्त्तिभीतात्मनामभयदोऽभयदेवसूरिः ।
पापातपापगमभन्वहमातपत्रीभूयाङ्गिनां शिरसि यस्य करश्चकार ॥ ११ ॥
तत्पट्टपर्वतमलङ्कुरुते स्म कर्मव्यालावलीहरिभुवा हरिभद्रसूरिः ।
भूम्ना यदीयचरणोपनतैरशोभि मुक्ताफलोज्ज्वलतमैर्जगती यशोभिः ॥ १२ ॥
शिष्यस्तस्य विभोर्नमस्यचरणाम्भोजस्य जज्ञे महान्
साहित्योपनिषन्नभोऽङ्गणरविः श्रीबालचन्द्रः कविः ।
यं स्वप्नान्तमुपेत्य तद्दृढतरानुध्यानतुष्टा जगौ
मत्पुत्रस्त्वमसीति शीतलगिरा देवी गिरामीश्वरी ॥ १४ ॥

बालचन्द्र—उपदेशकन्दलीवृत्ति

*cf.* also **नटः**—मारिष ! श्रीदेवेन्द्रगुरुस्वहस्तस्वपदनिवेशितस्य भुवनभद्रङ्करस्य श्रीभद्रेश्वरसूरिसुगुरोः पट्टनभस्तलालङ्करणकिरणमालिना प्रतिवादिदितितनयदमनशौरिणा श्रीमदभयदेवसूरिणा निजकरतामरसप्रतिष्ठितानप्रतिमप्रतिभाभरसौरभदुर्भगीकृतत्रिदशसूरीन् श्रीहरिभद्रसूरीनभिजानासि ? ।

**सूत्रधारः**—( साक्षेपम् )

साहित्याम्बुधिबन्धुरामतितरां पट्तर्कखण्डान्वितां
नानालक्षणदुर्गदुर्गमतमां विद्यामनन्तामपि ।
सच्चक्रेण समाश्रिताः सुकृतिनो ये साधयन्ति स्म ता-
नेकः को मुनिचक्रवर्त्तिन इह क्षोणीतले वेद न ॥ १० ॥

अपरं च—

विलसदमृतद्वेषा येषां वचःप्रचयं पपुः
सपुलकवपुःस्तम्भा जम्भान्तिकादिसुराः पुरा
तदपलपने ते वर्त्तेरन्नथापरथा कथं
न विधुरधुना तत्पिण्याकः स चेद्भुवनं भवेत् ॥ ११ ॥

अपि च—

यत्कीर्त्तिगौर्येण मिथोऽप्यलक्ष्यौ गौरीगिरीशौ दिवि गौरकान्ती ।
करप्रपञ्चैर्मिलितौ वियोगभीत्यार्द्धनारीश्वरतां प्रपन्नौ ॥ १२ ॥

बालचन्द्र—करुणावज्रायुध Act I

भद्रश्रीहरिभद्रसूरिसुगुरोः पट्तर्कविद्याविदः
शिष्यः श्रीश्रुतदेवतासुत इति ख्यातः प्रबन्धं व्यधात् ।
श्रीवज्रायुधचक्रवर्तिचरितव्याहारवैतालिकं
विद्वत्कर्णरसारसायनममुं श्रीबालचन्द्रः कविः ॥ १ ॥ Ibid Act V

also गूर्जरवसुन्धरावदनमण्डलीनगरमण्डनश्रीमहावीरचैत्यप्रतिष्ठाकृतः सुकृतचरितचमत्कृतदेवेन्द्रस्य श्रीदेवेन्द्रगुरुस्वहस्तपदविनिवेशितस्य भुवनभद्रङ्करस्य श्रीभद्रेश्वरसूरिसुगुरोः पट्टनभस्तलालङ्करणकिरणमालिना प्रवादिदैत्यदमनशौरिणा श्रीमदभयदेवसूरिणा ।

विवेकमञ्जरीवृत्ति